॥ श्रीः ॥

# भेदसाम्राज्यम्

श्रीपरमहंसपरिव्राजकाचार्यैः

परपक्षनिराकरणादिबहुविधप्रबन्धप्रणेतृभिः

**श्री कोन्डियाल्म् स्वामिनः**

इति

जगति विख्यातैः

**श्रीरङ्गरामानुजमहादेशिकैः**

विरचितम्

तत्रायमादिमः

**वेदान्तभागः**

तिरुपति श्रीवाणीमुद्रणालये

मुद्रितः

( विघु ) वृषमानानुराधायां

प्रकाशितः

1912.

मूल्यम् ] [ १ - ८ - ०

॥ श्रीः ॥

# भेदसाम्राज्यम्

श्रीपरमहंसपरिव्राजकाचार्यैः

परपक्षनिराक्रियापाटवबहुविधप्रबन्धप्रणेतृभिः

**श्री कोलियालम् स्वामिनः**

इति

जगति विख्यातैः

**श्रीरङ्गरामानुजमहादेशिकैः**

विरचितम्

तत्रायमादिमः

## वेदान्तभागः


तिरुपति श्रीवर्णमुद्रणालये

मुद्रितम्

( त्रिपु ) वृषभ नान्नुराधायां

प्रकाशितम्.

194..

मूल्यम् ] [ १-८-०

॥ श्रीः ॥

प्रज्ञावैराग्यवार्धिर्जयति बहुवरग्रन्थकृत् सुप्रसिद्धो
योऽयं श्रीरङ्गरामानुजयतिनृपतिस्तस्य षष्ट्यब्दपूर्तौ ।
तच्चातुर्मास्यसङ्कल्पाविलसदधिकृतिर्भेदसाम्राज्यसंज्ञे ।
तद्ग्रन्थे मुद्रितस्तत्पदकमलनतैरेष वेदान्तभागः ॥

## शोधनिका.

| पुट. | पङ्क्ति. | शुद्धं. | पुट. | पङ्क्ति. | शुद्धं. |
|---|---|---|---|---|---|
| २ | २० | गीता | ६४ | १७ | नन्दे |
| ५ | १ | वद्ज्ञा | ६५ | १ | जीवपरभेद |
| ७ | ७ | ष्टः, लब्ध्वा विद्यामेतां-योगविधिश्च कृत्स्नं, ब्रह्म- | ६६ | ८ | 'अहं ब्रह्मास्मि |
| | | | ६६ | २५ | उपास्य |
| ७ | २३ | प्राप्यत्वस्य | ६७ | २४ | परमा |
| ८ | २६ | प्रकरणे | ७० | २ | आनन्त्यं |
| ९ | २ | कैकार्थ | ७० | ३ | मायात्म |
| १० | ५ | त्मेति मत्वा | ७२ | १० | बह्वर्थ |
| १७ | १९ | च्छिन्नास्सु | ७३ | १२ | क्षत्वात् |
| १९ | १४ | रप्यभ्यु | ७४ | २३ | त्मना |
| २२ | २४ | एव, आन – | ७५ | ११ | नन्तरम |
| २४ | १९ | ब्रह्म व्यतिरिक्तसर्व- | ७६ | १५ | परयो |
| २४ | २० | राणामपि- | ७६ | २४ | व्याप्तम् |
| २६ | २१ | त्मत्वभ्र | ८० | २१ | विरोधा |
| २९ | ५ | आत्मभू- | ८१ | ८ | दुःखमयं |
| ३० | २४ | विष्ट | ८२ | १२ | व्यार्यातिशानं |
| ३३ | १७ | स्मिन् | ८२ | १७ | दुर्धर्षस्त |
| ३१ | ३ | कार्यकर | ८३ | २१ | दत्यलम् । |
| ३६ | ८ | पर्यायेषु प्रत्येकं मधु | ८४ | २० | सम्बन्ध |
| ३६ | २१ | विशेषण | १०३ | १० | इत्युच्यत इत्यर्थःप्रतीयते |
| ३९ | २२ | त्वाद्य | १०५ | ५ | म्यहमिति शरीरत्वपर्यव सायि स्वा |
| ४० | १८ | द्वाष्य | | | |
| ४१ | ५ | महामलिन्लन्त्व | १०५ | १६ | गत्वेत्यत्रान्वेति । परमात्मानं प्राप्येत्यर्थः। प्रथमान्तत्वे |
| ४१ | ७ | कारण ब्रह्मत्वा | | | |
| ४१ | ११ | यत ' इत्या | | | |
| ४८ | ११ | आद्रुपू | १०५ | २१ | यत्र गत्वेत्यादिनि |
| ६३ | १२ | वामृता | १०५ | २५ | सूरिनेत्र |
| ६४ | १५ | तया | ११४ | २२ | जीवपरैक्य- |

॥ श्रीः ॥



श्रीमते वेदान्तरामानुजमहादेशिकाय नमः
श्रीमते रङ्गरामानुजमहादेशिकाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमते भगवद्रामानुजाय नमः

# भेदसाम्राज्यम्

श्रीकान्तप्रमुखान् वेदचूडादेशिकमध्यमान् ।
वेदान्तलक्ष्मणाभिख्ययतीन्द्रान्तान् गुरून् भजे ॥

दृष्टस्वमहिमानम्रपार्श्वस्थपतिसेविताम् ।
पद्मावतीं श्रियं वन्दे स्वातन्त्र्यविभवोज्ज्वलाम् ॥

यद्वित्तिविभवाद्विष्णुर्विश्वरो विश्वविग्रहः ।
विभाति विप्रवित्ते तं विनतोऽस्मि यतीश्वरम् ॥

प्रतिवादिघटागर्वनिर्वापणपटीयसीम् ।
वन्दे विद्यामयीं काञ्चिदेवतां देवताधिकाम् ॥

अतसीगुच्छसच्छायं श्रीमद् वेङ्कटभूषणम् ।
यत्स्वान्तवासि तं वन्दे रङ्गरामानुजं मुनिम् ॥

मन्दोऽपि यत्कटाक्षेण बुधो भवति तत्क्षणात् ।
गुरुश्च, नौमि तं वेदचडालक्ष्मणयोगिनम् ॥

वेदान्तगीतामृश्राणां परपक्षविरुद्धता ।
सर्वेषां सुखबोधाय सङ्ग्रहेण प्रदर्श्यते ॥

वस्तुतस्सजातीयविजातीयस्वगतभेदरहिते अतएव निर्विशेषे चिद्रूपे परस्मिन्ब्रह्मणि सर्वोऽपि प्रपञ्चः शुक्ताविव रजतमध्यस्तः, अत एव शुक्तिरूपाधिष्ठानयाथार्थ्यज्ञानेन रजतमिव 'तत्वमसी' त्यादिवाक्यजन्येन साक्षात्काररूपेण निर्विशेषब्रह्माहमस्मीत्येवमात्मकज्ञानेन बाध्यत इति मिथ्याभूत एव। रजताध्यासहेतुभूतशुक्तिगतसादृश्यादिदोषस्थानापन्नश्चात्र प्रपञ्चाध्यासहेतुभूतो दोषः भावरूपाज्ञानादिशब्दितानाद्यविद्यैव। इत्थंच निर्विशेषब्रह्मण एवानाद्यविद्यासंबन्धः, तन्निबन्धनः अहं नाना इति आत्मनि विविधप्रपञ्चवैशिष्ट्याध्यासः, तन्मूलकस्सुखदुःखानुभवश्च बन्धः। सोऽपि वस्तुतोऽविद्यमानतया मिथ्याभूतः। निरुक्तज्ञानविशेषेण विद्यमानशरीरानुवृत्तावपि, ईदृशबन्धनिवृत्तिरेव मुक्तिः। सापि ब्रह्मण एव। तदयं तन्मते तत्त्वहितपुरुषार्थविवेकः – निर्विशेषं ब्रह्माविद्यावशात्स्वयमेव बंभ्रमीति, अविद्यानिवर्तकं ज्ञानं 'तत्त्वमस्या' दिवाक्यजन्यमविधेयम्, तेन मिथ्याभूताविद्यातत्कार्यनिवृत्तौ भ्रान्तिराहित्येन शुद्धचैतन्यस्थितिर्मुक्तिरिति। तच्च ब्रह्म समस्तज्ञानागोचरः, समस्तशब्दावाच्यं च। अत एव यत्किञ्चित्प्रमाणाधीनसिद्धि न भवति। अपितु स्वप्रकाशतया स्वयमेव सिद्धम्। एवं नित्यशुद्धबुद्धमुक्तस्वप्रकाशनिर्विशेषब्रह्मात्मैक्यमेव सोपबृंहणास्सर्वे वेदान्ताः प्राधान्येन प्रतिपादयन्ति। तत्समानार्थमेव गीताशास्त्रं ब्रह्मसूत्रजालं च इतीयं मृषावादिनां मतप्रक्रिया॥

एवमङ्गीकारे सर्वा अप्युपनिषदः, कृत्स्नं गीतशास्त्रं, समग्रं ब्रह्मसूत्रजातं च विरुध्यन्त इति कृत्स्नविरोधप्रकाशावश्यकतायामपि स्थालीपुलाकनीतिमनुरुन्धानाः त्रिष्वपि कांश्चिदेव स्फुटतरविरोधानत्र प्रकाशयामः। विवेचनचतुराः विमत्सरा विद्वांस एव विशेषतः प्रमाणमेतत्सारासारयोरिति प्रतीमः॥

तथाहि – सर्वोपनिषदपेक्षया प्रथमपरिगणितायां ईशावास्योपनिषदि प्रथमोऽयं मन्त्रः 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धन'मिति। अत्र पूर्वार्धं तावत्परमतविरुद्ध मुपलभ्यते । इदं सर्वं जगत् सर्वनियन्त्रा व्याप्यं स्वस्मिन् स्वेन वासनीयं वा इति तदर्थस्स्वरसतः प्रतीयते। उपबृंहणञ्च 'मया ततमिदं सर्वं'मित्यादि। अत्र सर्वनियन्तृवाचकेनेट्पदेन जगच्छब्दनिर्दिष्टस्य सर्वस्य परमात्मनियाम्यत्वं, तत एव तस्य सत्यत्वं, परमात्मनस्तन्नियन्तृत्वं, अत एव तदौपयिकज्ञानशक्त्यादिकल्याणगुणगणवत्त्वं, ईट्पदवाच्यत्वं, ईशेशितव्ययोः स्वाभाविकभेदश्च अविदिततदीयविलक्षणवेदान्तार्थजातस्य शिष्यस्य श्रवणकाले धियमधिरोहति। नह्येतेष्वर्थेषु कस्यापि केनापि हेतुना बाधलेशमपि प्रत्येति कदाऽपि प्रत्येता। मातापितृसहस्रेभ्योपि वत्सलतरम्, अत एवात्मोज्जिजीवयिषया प्रवृत्तं शास्त्रं कथमीदृशं बहुविधानर्थहेतुं भेदजातं पूर्वमेव विविधभेदभ्रमसागरे परिप्लवमानं प्रत्युपदिशेत्। उपादिशद्वा समुज्जीवयेत्। अतः प्रथमोपनिषत्प्रथममन्त्रप्रथमभाग एव परेषामत्यन्तप्रतिकूलः। पररीत्या 'सर्वमिदं न वस्तुसद्गृह्णीयाः, परमात्मा एक एव परमार्थतोऽस्ति, सर्वमिदं तद्भ्रान्तिसिद्धमित्येव गृह्णीयाः' इत्येवंरूपेणह्युपदेशेन भवितव्यम्। यस्तावदर्थः प्रेक्षावता स्वानर्थहेतुः पूर्वगृहीतः, तन्निरसनपूर्वकं वस्तुतत्त्वोपदेशो हि वत्सलतरकृत्यम्। न तु पूर्वसिद्धभ्रमादधिकभ्रमोत्पादनम्। ततश्च सर्वमपि प्रपञ्चं स्वतन्त्रतया गृहीतवतश्शिष्यस्य, जगतः ईश्वरपारतन्त्र्योपदेशेन स्वातन्त्र्यग्रहणं प्रतिषेधत्याचार्य इत्येवाभ्युपगन्तव्यम्। यत्तु ईशा=इदं सर्वं अहमेवेति स्वात्मभावनया, सर्वमिदं जगत्– कर्तृत्वभोक्तृत्वादिरूपं विकारजातं, वास्यं – आच्छादनीयं, निरसनीयमिति व्याख्यानं, तत् अतिक्लिष्टं, ईशा, भुञ्जीथाः इति पदद्वयप्रतिपन्नजीवपरभेदविरुद्धं, विविधेशितव्यसापेक्षेशनप्रतीतिविरुद्धं, निर्युक्तिकं, निष्प्रमाणं, अनन्यथासिद्ध-

बहुप्रमाणपदवीदवीयश्चेत्युपेक्ष्यम् । किं बहुना, 'स्वेनात्मना ईशा' इतीदं सर्वात्मना स्वार्जितमेवेति विशेषविद्भिर्विज्ञेयम् ।

अत्रेदं बोध्यम्—अस्यामुपनिषद्यष्टादशैव मन्त्राः । तत्र द्वितीयो मन्त्रो नवमाद्याश्च कर्मदेवतोपासनादिपरा इति, प्रथमः तृतीयाद्यष्टमान्ताश्च मन्त्रा निर्विशेषतत्त्वपरा इति च परेषां मतम् । तत्र प्रथमस्य न निर्विशेपरत्वमित्यवोचाम । उपरि षट्सु मन्त्रेष्वपि न जगदपलापः क्वापि प्रतीयते; प्रत्युत सर्ववस्तुव्यापित्वादिकमेवोच्यते; विशिष्य चाष्टमान्ते घुष्यते—'कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः' इति परमात्मनोऽनवद्यस्य सर्वज्ञत्वसत्यजगत्स्रष्टृत्वादिः कल्याणगुणः । एवञ्च सर्वत्र क्लेशेनैव तदिष्टतत्त्वपरत्वमारोप्यमिति स्थिते किमिति द्वितीयादीन् मन्त्रांस्त उपेक्षन्त इति न विद्मः । तत्रापि हि, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः कश्चित् । एवं त्वयि न । इतोऽन्यथाऽस्ति । न कर्म । लिप्यते नरे तत्'इत्येवं कुसृतिः प्रसृतिं लभते । यद्यत्र स्वरसयोजनाविघाताद्द्विद्वेषः, कथंतरां सर्ववाच्यार्थभङ्गेन प्रथमादिमन्त्रेष्वसंभावितार्थारोपः? एवं प्रथमद्वितीयमन्त्रयोः भुञ्जीथाः, मागृधः, त्वयि इत्येवं मध्यमपुरुषयुष्मच्छब्दाभ्यामेकाधिकारिविषयत्वे विस्पष्टे किमिति विभिन्नाधिकारिकल्पना? तर्हि कृत्स्नेयमुपनिषदनाघ्राताद्वैता प्रसज्यत इति चेत्—तत एव त्यज्यतामद्वैतवाद इति ॥

एवं केनोपनिषदि 'केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति'॥ 'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः । चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति'॥ इति प्रथमद्वितीयौ मन्त्रौ । तत्र प्रथमः सर्वबाह्यविरक्तस्य शिष्यस्य ब्रह्मजिज्ञासापर इति परैरेव व्याख्यातः । तस्य चायमर्थः प्रतीयते—मनोवाक्चक्षुश्श्रोत्रमुख्यप्राणाः केन देवेन प्रेरितास्सन्तस्स्वस्वकार्याणि कुर्वत इति । तस्यचोत्तरं 'श्रोत्रस्य श्रोत्र' मित्यादि । अस्यचायमर्थः पूर्वोक्तानां तत्तत्कार्यजननशक्तिहेतुभूतः

परमात्मा कश्चन वर्तते, यं शास्त्रतो यथावदज्ञात्वा तदुपासननिष्ठाः लोकान्तरं प्राप्य मुक्ता भवन्तीति । यथावस्थितमुक्तिहेतुभूतोपासनविषयः परमात्माऽकर्मवश्यः पूर्वोक्तानां प्रेरक इत्युक्तं भवति । मुमुक्षूपास्यो मोक्षप्रदश्श्रीमान्नारायण एव इन्द्रियादितत्तत्पदार्थान्तर्यामी संस्तत्तत्प्रेरको हृषीकेश इति फलितार्थः । 'इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च' इत्याद्युपबृंहणानुगुण्यात् । इदंचोत्तरमत्यन्तप्रतिकूलं परमते । चक्षुरादीन्द्रियाणां प्राणस्य च को देवः प्रवर्तक इति अतत्त्वविदस्तत्त्वबुभुत्सया प्रश्ने प्रवर्त्यमानमर्थस्वरूपं प्रवृत्तिं प्रवर्तयितारश्चाभ्युपगम्य तस्य मुक्तिहेतुभूतोपासनविषयपुरुषविशेषरूपत्वोपदेशासङ्गतेः । 'केन कं पश्येत्, केन कं विजानीयात्' इत्यादिवत्, कानि नामेन्द्रियादीनि का वा प्रवृत्तिः, को नाम प्रवर्तकः, आत्मैव तत्त्वं; निर्विशेषब्रह्मभ्रान्तिविलसितं हि सर्वमिदमिति खलूपदेष्टव्यं तन्मते गुरुणा ।

यत्त्वत्र व्याख्यानं — 'श्रोत्रादौ ह्यात्मभावं कृत्वा तदुपाधिस्सन् तदात्मना जायते । अतिमुच्य — श्रोत्रात्मभावं परित्यज्य, धीराः — तत्त्यागहेतुभूतविशिष्टधीमन्तः' इति, तस्येदं तात्पर्यमवगम्यते — इन्द्रियात्मभ्रमस्संसारहेतुः, त्यक्तेदृशभ्रमा एव मुच्यन्त इति । तत्र न नो विद्वेषः; प्रमेयशरीरस्याबाधितत्वात् । परन्तु मन्त्रस्येदृशतात्पर्यकल्पनं क्लिष्टं प्रकरणविरुद्धञ्च । प्रष्टा हि इन्द्रियात्मभेदं, चेतनस्यैव देवस्य प्रवर्तयितृत्वञ्च विजानानस्तद्विशेषमेवाकांक्षति; न तु प्रवर्त्यमेव प्रवर्तकं भ्राम्यन् पृच्छति । अतः प्रवर्तकविशेषज्ञापन एव तात्पर्यं वर्णनीयम्; नत्विन्द्रियात्मभेदज्ञापने । तथाचेदिदं कृतप्रश्नस्योत्तरं न भवेत्; प्रवर्तकदेवताविशेषप्रश्ने प्रवर्त्यप्रवर्तकभेदोपदेशस्यासङ्गतेः । एवमर्थवर्णनेऽपि तत्त्वोपदेशप्रकरणे ब्रह्मव्यतिरिक्तदेहेन्द्रियादिप्रपञ्चमिथ्यात्व उपदेष्टव्ये आत्मन इवेन्द्रियादेरपि सत्यत्वपर्यवसायी इन्द्रियात्मभेदोपदेशस्सर्वथा परेषामसंगत एव । अतिमुच्येत्यस्यचाकाण्डे श्रोत्राद्यात्मभावं परित्यज्येत्यर्थ

वर्णनापेक्षया तं श्रोत्रादिप्रवर्तयितारं ज्ञात्वेत्यर्थवर्णनस्यात्यन्तोचितत्वात् विदित्वेत्यध्याहारक्लेशाभावाच्च निरुक्तार्थ एव युक्तः। अध्याहारापेक्षया लक्षणाया लघीयस्त्वात्। आङ्प्रत्ययोरिवातीत्युपसर्गस्य बलाद्धातोर्धारणाद्यर्थान्तरपरत्वमप्युपपद्यते। धातुशक्त्यार्थरक्षणाभिनिवेशे 'चक्षुषश्चक्षु' रित्यन्तेन 'यश्चक्षुषि तिष्ठन् — दिव्यो देव एको नारायण' इत्याद्यनुसारेण देवताविशेषस्यैव प्रवर्तकत्वप्रतिपादनसिद्ध्या मुमुक्षूपास्यातिरिक्तस्याग्न्यादेः देवतान्तरस्य श्रुत्यन्तराऽऽपातप्रतीतप्रवर्तकत्वशङ्कां परित्यज्येत्यर्थ एवोचिततमः। अत्र 'अस्माल्लोकात्प्रेत्यामृता भवन्ती' त्यनेन तदभिमता जीवन्मुक्तिर्निरस्ता भवति। एतेनेयमप्युपनिषत् उपक्रम एव परमतविरुद्धेत्युपपादितं भवति।

एवमुपर्यपि देवानामन्येषामसुरविजयादौ स्वतन्त्रकर्तृत्वभ्रमनिरासाय ब्रह्म कदाचिदाविर्भूय अग्निवाय्वादेस्तत्तत्कार्यदाहादानादावपि स्वातन्त्र्येण सर्वथैवाशक्तत्वमज्ञत्वञ्च प्रदर्शयामास। अहङ्काराधिको देवेन्द्रोऽपि उमायास्स्त्रिया मुखेन तत्त्वं प्रतिबोधित इति श्रुतिः श्रावयन्ती देवाधिराजं सर्वान्तर्यामिणं दर्शयति। अतश्चासुरविजयादौ साक्षात् तत्तद्देवावेशेन च मुख्यकर्ता विष्णुरेव प्रागुक्तो हृषीकेशः परं ब्रह्मेति सिद्धम्। तदेवं सर्वजगन्नियमनादिगुणविशिष्टपरब्रह्मसत्यत्वे स्पष्टेनात्रोपनिषदि निर्विशेषवादस्यावसरः। एवं प्रतिमन्त्रमप्यत्र तन्मतविरोधो द्रष्टव्यः ॥ २ ॥

कठोपनिषदपि – 'अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥' 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'। 'गुहां प्रविष्टौ' 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्'। 'बुद्धेरात्मा महान् परः। महतः परमव्यक्तं अव्यक्तात्पुरुषः परः'। 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते'। 'ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि'। 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते'। 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति'

'य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य' । 'यतश्चोदेति सूर्यः' । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' । 'एकं बीजं बहुधा यः करोति तमात्मस्थं' । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति । कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम्' । यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्' । 'भयादस्याग्निस्तपति' । 'तयोर्ध्वमायन्नमृतत्वमेति' । 'सदा जनानां हृदये सन्निविष्टः' 'ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः' । इत्येवं कात्स्न्र्येन परमतात्यन्तविरुद्धैवोपलभ्यते । एभिर्वाक्यैः कस्यचिदात्मनः जीवात्मान्तर्यामित्वस्य तथा जीवशोकनिवृत्तिहेतुभूतदर्शनविषयत्वस्य, स्ववरणकर्मीभूतजीवप्राप्यत्वस्य,युगपज्जीवेन सह हृदयगुहावर्तित्वस्य, स्वप्राप्तिसाधनीभूतशरीरेन्द्रियादिविजयनिबन्धनविज्ञानसंपन्नशुचिपुरुषविशेषप्राप्यत्व विष्णुपदवाच्यत्वादेः, जीवाधिकशरीराधिकत्वस्य,गूढत्वेन सकलचेतनान्तर्वर्तित्वस्य,जीवादधिकत्वस्य,मुक्तिहेतुभूतदर्शनविषयत्वस्य,उपासकशोकनिवृत्तिहेतुभूतमननकर्मत्वस्य, हृदयगुहायां फलभोक्तृजीवात्मसमीपवर्तित्वस्य तथा भूतभव्यसर्वेशितृत्वस्य,भाव्यवस्थाविरोधिपूर्वावस्थाश्रयत्वरूपस्य प्रमाणप्रतिपन्नस्यसूर्यपदोपलक्षितसर्वप्रपञ्चोपादानत्वस्य, स्वोपासकस्य जीवस्य स्वसाम्यप्रदत्वस्य, महदादिरूपेण प्रधानपरिणामहेतुत्वस्य, अनेकनित्यचेतनाभिमततत्तत्फलप्रदाननिरतत्वनित्यत्व चेतनत्वादेः तथा आत्मान्तर्यामितया स्वोपासकस्यैव शाश्वतशान्तिहेतुत्वस्य, अग्निसूर्यादिसमस्तचेतनवर्गस्य तच्छासनातिवृत्तौ किं भविष्यतीत्येवंरूपभयनिबन्धनकम्पनहेतुत्वस्य, मूर्धन्यनाडीविशेषान्निष्क्रान्तपुरुषविशेषप्राप्यत्वस्य, पुनरपि सकलजनहृदयनिविष्टरूपेण तदन्तरात्मत्वस्य, लब्धात्मविद्यायोगविधिकपुरुषविशेषप्राप्ये गुणतस्स्वरूपतश्च निरतिशयबृहत्त्वविशिष्टत्वस्य च स्वरसतः प्रतिपादनात् जीवपरयोस्स्वाभाविकभेदः, परस्यान्तःप्रविश्य सर्वनियन्तृत्वं, तदुपासनादमृतत्वप्राप्तिः, तस्याश्च मूर्धन्यनाडीनिष्क्रमणानन्तरभावित्व तत्साम्या-

पत्तिरूपत्वे इत्येवंरूप पराभिमतविरुद्धतत्त्वहितपुरुषार्थविशेषप्रतीतेः ॥

'अणोरणीयान्महतो महीयान्' इत्यस्य यद्व्याख्यानम् – 'अनेन अणुत्वाद्यध्यासाधिष्ठानत्वमुच्यते, अन्यथा परस्परविरोधा' दिति – तन्न, ईदृशात्यन्तविरुद्धोभयविधाध्यासाधिष्ठानत्वस्यापि निर्विशेषे ब्रह्मणि विरुद्धत्वात् ; अध्यासाधिष्ठानत्वस्य शब्दतः कथमप्यलाभाच्च; विरोधपरिहारायोभयत्र लक्षणाकल्पनस्यायुक्तत्वाच्च। अतोऽणुतरत्वमत्र 'य आत्मनि तिष्ठ' न्नित्यादिप्रमाणप्रतिपन्नाणुरूपजीवानुप्रवेशौपयिकप्रतिघातानर्हत्वरूपनिरतिशयसूक्ष्मत्वम् । महत्त्वं विभुत्वमेव । महत्पदञ्चात्र विभुभिन्नाधिकपरिमाणवत्परम् । एवं स्वरसार्थाङ्गीकारे न विरोधगन्धोऽपि । अध्यासस्यैव निष्प्रमाणतया लक्ष्यार्थाप्रसिद्धिश्च परमते ॥

यदपि – 'यमेवैष वृणुते' इत्यस्य व्याख्यानं – 'स्वात्मानमेव साधकः प्रार्थयते । तेनैवात्मना वरित्रा स्वयमात्मा लभ्य' इति । तदपि न । वस्तुतः पररीत्या प्रार्थयितृप्रार्थनीययोरभेदेऽपि यं, एषः, तेन, इत्येवं कश्चित्प्रकारविशेषमादाय भेदनिर्देशात्, यत्तदोरेकार्थकत्वौचित्याच्च वरणीयस्यैव तच्छब्देन बोधनीयतया तस्य प्रार्थयितृपरत्ववर्णनायोगात् । तथाङ्गीकारेपि परेषामर्थानुपपत्तिस्स्थिता; साधकत्वावस्थस्य वरणीयप्राप्यत्वासङ्गतेः । सेयं परेषामुभयतस्पाशा रज्जुः । इदञ्च वाक्यं मुक्तिसाधनतया वाक्यान्तरविहिते ज्ञानविशेषे प्रीतिरूपत्वविधायकमित्येतदन्यत्र स्फुटम् ।

यदपि 'गुहां प्रविष्टावात्माना' विति सूत्रानुगुण्यलिप्सया 'ऋतं पिबन्ता' वित्यस्य जीवपरविषयतया व्याख्यानं, तदपि तन्मतेऽसङ्गतम् । परमात्मनस्तत्पक्षे जीवभावेनैव गुहाप्रवेशाभ्युपगमाज्जीवपरौ प्रविष्टाविति साहित्येन निर्देशायोगात् । न हि ब्रह्मजीवौ संसरत इति निर्देश उपपद्यते । सूत्रेऽप्यात्मानाविति तन्मतरीत्याऽनुपपन्नमिति तदवसरे वक्ष्यते।

यदपि 'बुद्धेरात्मा महान्' इत्यादेर्व्याख्यानं, 'बुद्ध्यपेक्षया हैरण्यगर्भतत्त्वं परं, तदपेक्षया अव्यक्तं, तदपेक्षया परमात्मे' ति–तदपि न, करणे-

ऽस्मिन् परमपदप्राप्त्यौपयिकार्थोपदेशः क्रियते । 'इन्द्रियेभ्य' इत्यादेः 'यच्छेत्' इत्यादेश्च तदौपयिकार्थपरत्वं तत्तत्पदार्थप्रत्यभिज्ञानादाश्रयणीयम् । तत्र पूर्वत्र वशीकार्येषु तस्मात्तस्मात्परमुपदिश्यते; परत्र वशीकरणप्रकारः। इत्थञ्च हैरण्यगर्भतत्त्वस्य का प्रसक्तिरत्रेति । ततश्च आत्मा महानिति जीव उच्यते; मूलप्रकृतिवाचिनाऽव्यक्तपदेन तत्परिणामभूतं शरीरमित्येवाश्रयणीयम् । शरीररूपकविन्यस्तगृहीतेरिति च सूत्रकारः । एवं 'आत्मनि महति' इत्येतदपि जीवपरमेव व्याख्यातव्यम् । उभयत्र अर्थादिषु प्राचीनेषु अव्यक्तविषये चाश्रुतस्यात्मशब्दस्यात्रैव श्रवणात्तस्य चेतनपरत्वमेवावश्याङ्गीकार्यम् । परेषां प्रत्यगात्मभूतत्वस्यार्थादीनां सर्वेषामपीष्टत्वादत्रैव तत्प्रयोगो निर्युक्तिकस्स्यात् । तस्य सर्वोपलक्षणत्वे सर्वेभ्यः परे अव्यक्त एव तदुक्तिरुचिता । 'ज्ञान आत्मनि' इत्यत्राप्यात्मपदं जीवपरमेव, अन्यथाऽर्थासङ्गतेः । आत्मनि वर्तमाने ज्ञान इत्यर्थः । किञ्च सर्वेषामपि प्रत्यगात्मभूतत्वं निष्प्रमाणं प्रकृतासङ्गतञ्च । प्रत्यगात्मभ्रान्तिविषयत्वं तु न तत्पदमुख्यार्थ इति ।

यदपि एष सर्वेष्वित्यादेर्व्याख्यानं, ब्रह्मादिस्तंबपर्यन्तक्षेत्रेषु मायाच्छन्नतया जीवः आत्मतया न प्रकाशते । अहं परमात्मेति न जानातीत्यर्थ इति – तदपि न । भूतशब्दस्य 'न हिंस्यात्सर्वा भूतानि' । 'भ्रामयन् सर्वभूतानी' त्यादाविवाचेतनविशिष्टचेतनपरत्वस्वारस्यात्, आत्मेत्यस्य एष इत्येतद्विशेष्यसमर्पकताया एव स्वरसत्वात्, 'अग्र्यया बुद्ध्या तु दृश्यत' इत्युक्त्या 'न प्रकाशत' इति प्रकाशसामान्यस्यैव निषेध्यत्वावगमात्; तत्रात्मतयेत्यध्याहारे तस्यैव दोषत्वाच्च । ततश्च सर्वचेतनान्तर्यामितया वर्तमानोऽपि परमात्मा अजितेन्द्रियाणां न प्रकाशते । जितेन्द्रियाणां तु परमात्मव्यतिरिक्ताविषयिण्या बुद्ध्या विषयीक्रियत इत्येवार्थस्स्वरसः, प्रमाणान्तरानुगुणः, प्रकृतोपयुक्तश्चेति ।

यच्च व्याख्यानं – 'निचाय्य त' मित्यस्य, 'तादृग्ब्रह्म आत्मानमवगम्ये' ति–तस्य, ब्रह्म परमात्मतया ज्ञात्वेत्यर्थकत्वे स्वाभिमतासिद्धिः ।

ऐक्यज्ञानं हि मोक्षसाधनतयाऽभिमतम् । अस्माकमविरोधश्च ! स्वाभिन्नतयेत्यर्थकत्वे तच्छब्दासामञ्जस्यम् । स हि यच्छब्दनिर्दिष्टमर्थान्तरमेव परामृशेत् । ज्ञानमात्मनि महतीति पूर्वप्रस्तुतजीवात्परत्वमप्यत्रैव महतःपरमित्युच्यत इति तद्विरोधश्च ।

एवं 'विभुमात्मानं मत्वे'त्यत्र 'आत्मभावेन साक्षादहमस्मि परमात्मेति' इति विवरणमपि 'पृथगात्मानं प्रेरितारञ्च मत्वे'त्यादिप्रमाणविरुद्धं, अस्वरसश्च ।

यदुक्तं 'य इद'मित्यत्र. जीवात्मानं कालत्रयस्येशितारं यो वेदेति । तन्न, शुद्धचैतन्याभेदज्ञानस्यैव मोक्षसाधनतया कालत्रयेशित्रभेदज्ञानस्यातथात्वात् । अन्तिकादित्यस्य सर्वथा वैयर्थ्यञ्च तन्मते । अतः जीवात्मानं, हृदये तत्समीपे अन्तर्यामितया वर्तमानं सर्वनियन्तारञ्चेत्येव तदर्थो वाच्यः । 'गुहां प्रविष्टौ' 'द्वा सुपर्णा' इत्याद्यैकार्थ्याच्च । अत्रेदमवधेयम् — 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यःपिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ॥' इति वचनान्तरम् । 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य' इति अत्र परिदृश्यमानं वचनम् । उभयमिदं युगपद्बुद्धौ कृत्वा पश्यन्तु भवन्तः अस्य, जीवात्मानं सर्वेशानतया यो वेदेति व्याख्यानं कथं वर्तत इति !

यच्चोक्तं यतश्चोदेतीत्यत्र, 'यस्मात्प्राणादुदेती'ति । तच्च न, प्रसिद्धप्राणस्य हिरण्यगर्भस्य वा सूर्योत्पत्त्युपादानत्वादेरप्रसिद्धत्वात् । देवादिसकलभूतजातोपादानत्वेन बहुश्रुतिप्रतिपन्नस्य नारायणस्यैव सूर्योपादानत्वस्यापि वक्तव्यतया यच्छब्दस्य तत्परताया एवावश्याश्रयणीयत्वात् ।

यथोदकमित्यत्र यदुक्तं, 'वेदेनोपदिष्टमात्मैकत्वदर्शनम्'इति, तत् मूलस्थताद्दक्पदात्यन्तविरुद्धम्। एतदभिप्रायेणैव तत्पदं न सम्यग्व्याख्यातम्।

यत्तु 'एकं बीज'मित्यत्र व्याख्यानम् आत्मानं विशुद्धविज्ञान-

रूपमिति । तन्न, शुद्धस्य जगद्बीजत्वायोगेन बीजपदार्थत्वासंभवात् । बीजपदं हि उपादानकारणवाचि । 'यो बीजमि' त्युक्तौ तयोर्भेदस्य स्वरससिद्धत्वाच्च । 'अस्मान्मायी सृजते विश्वमेतत्' । 'मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्' । 'अध्यासिता तेन' । 'तेनैवाधिष्ठिता जगत्' इत्याद्यनुरोधाद्बीजपदं तमः पदवाच्यप्रकृतिपरमित्यङ्गीकार्यत्वाच्च । विरुद्धत्वाभिप्रायेणैव बीजपदं न व्याख्यातम् । 'विशुद्धविज्ञानरूप' मित्येतत्तु न बीजपदव्याख्यानं भवितुमर्हति । बीजपदं हि अङ्कुरादिपरिणामि बीजतुल्यस्थूलजगत्परिणामिसूक्ष्मवस्तुपरम् । विवर्तोपादानं तु वन्ध्यासुतसोदरम् ।

यदपि तमात्मस्थमि त्यस्य 'स्वशरीरहृदयाकाशे चैतन्याकारेणाभिव्यक्त' मिति विवरणं, तन्न । 'यो विज्ञाने तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्याद्यनुसारेण जीवान्तर्यामित्वस्यैव स्वरसतः प्रतीतेः, ईदृशकुसृष्टिकल्पनाया निष्प्रमाणत्वाच्च ।

नित्यानां बहूनां चेतनानां नित्य एको यश्चेतनः कामान्विदधाति, तमात्मस्थमिति स्वारसिकार्थे प्रतीयमाने यद्व्याख्यानं 'नित्यो नित्याना' मित्यादेः– 'विनाशिनामविनाशी, प्रळये विनश्यत्सर्वं यत्र शक्तिशेषं विलीयते, सोऽभ्युपगन्तव्यः । आत्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् , अग्निनिमित्तमिव दाहकत्वमनग्नीनाम् । अतस्सोऽस्ति पर इत्यभ्युपगन्तव्यः । कर्मफलमपि सेवाफलमिव तत्स्वरूपाद्यभिज्ञेन दीयमानमभ्युपगन्तव्यमिति तदभिज्ञः परोऽस्ती' ति । तच्छ्रोतृणामाश्चर्यरसमेवाऽऽवहति, क्लिष्टत्वादनुपपन्नत्वाच्च । अत्र 'चेतनश्चेतनाना' मित्यनुरोधेन नित्यानामिति च्छेद एव हि युक्तः । षष्ठ्यन्तानां प्रथमान्तानाञ्च विशेषणविशेष्यभावे स्वारसिके तद्भङ्गेनार्थवर्णनञ्चान्याय्यम् । एवं शक्तिशेषं विलयेऽपि जीवानां पृथगभावे अकृताभ्यागमकृतविप्रणाशप्रसंगः । सर्वत्र लयस्याधारसापेक्षतया प्रलये नित्यस्यावश्यकत्वेपि अविद्याया एव तत्त्वमुचितम् , परिणाम्युपादाने हि कार्यलयो लोके दृष्टः । एवमात्मन्यपि चैतन्यमात्रे मुख्यं

चैतन्याश्रयत्वरूपं चेतनत्वं दुर्वचमिति तस्याप्यन्यचेतनाविशेष एव । एवमेको बहूनामित्यस्य पूर्वोक्तांशद्वयसरूपार्थवर्णनं न दृश्यते। लोके च सेवाफलं बहुभिरेकस्मै दीयमानमपि स्वस्वरूपाभिन्नमवगमयत्येवेति ।

यच्च व्याख्यानं 'तयोर्ध्वमायन्नमृतत्वमेती' त्यस्य, अपकृष्टब्रह्मविदां, विद्यान्तरनिष्ठानाञ्च ब्रह्मलोकभाजामग्निविद्यानिष्ठस्य वा गतिरियमुच्यते, उत्कृष्टब्रह्मविदोऽत्रैवामृतत्वश्रवणात् सर्वव्यापिब्रह्मप्राप्तौ गत्यनपेक्षणाच्चेति, तन्न, उत्कृष्टब्रह्मविद एव 'अस्माच्छरीरात्समुत्थाय' 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यादिप्रमाणसहस्रेण शरीरविमोक्षणानन्तरमर्चिरादिमार्गेण ब्रह्मप्राप्तिप्रतिपादनात्, 'अत्र ब्रह्म समश्नुत' इत्यस्य उपासनकालिकब्रह्मानुभवविषयत्वस्यावश्याश्रयणीयत्वात्, ब्रह्मणस्स्वरूपेण व्यापित्वेऽपि देशविशेषावच्छिन्नात्रिलक्षणाविग्रहविशेषादिविशिष्टब्रह्मप्राप्ति तत्पूर्वकस्वाभाविकगुणाष्टकाविर्भावादेरेव मुख्यमुक्तिरूपतायाः 'शरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिप्रमाणप्रतिपन्नत्वेन तदर्थं गतेरवश्यापेक्षितत्वाच्च । पूर्वं 'अत्र ब्रह्म समश्नुते' इत्युक्त्वा 'शतञ्चैका चे'ति देशान्तरप्राप्तिपूर्वकामृतत्वनिगमनात् अत्र लभ्यमानामृतत्वापेक्षया पश्चाद्भाविदेशान्तरेऽमृतत्वं मुख्यमिति प्रदर्श्य 'विमुक्तश्च विमुच्यत' इति पूर्वोक्तविवरणपरत्वावगमाच्च । एतेन गत्यागमस्य गतिश्रवणसामर्थ्येनैव परिच्छिन्नब्रह्मप्राप्तिकामाविषयकत्वमेव वक्तव्यम्, न प्रकरणादपरिच्छिन्नब्रह्मप्राप्तिकामाविषयत्वम्, लिङ्गापेक्षया प्रकरणस्य दुर्बलत्वादिति निरस्तम्, विरोधे सत्येव बलाबलविचारप्रवृत्तेः, अत्र च परिच्छिन्नदेशविशेषगतिपूर्वकपरिपूर्णब्रह्मप्राप्तेरेव मुक्तित्वाभ्युपगमेन गमनापेक्षणाद्विरोधगन्धाभावादिति ।

एतदुपनिषदन्ते परमप्राप्यस्य ब्रह्मशब्देन प्रतिपादनमेकमेव निर्विशेषब्रह्मवादिपरमतानिश्शेषनिरसनायालम् । 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' इत्यादिप्रमाणेन स्वरूपतो गुणतश्च निरतिशयबृहत्व-

विशिष्टस्यैव तद्वाच्यत्वादित्यलमतिचर्चया ॥ तस्सिद्धं कठोपनिषदपि कात्स्न्र्येन परमतविरुद्धेति ॥ ३ ॥

एवं प्रश्नोपनिषदपि परप्रतिकूलैव परिदृश्यते । तत्रोपक्रमे 'कुतो ह वा इमाः प्रजाः प्रजायन्त' इति परं ब्रह्मान्वेषमाणेन प्रश्नः कृत उपलभ्यते । तस्य च 'प्रजाकामो वै'इत्यादिना प्रजापतिसकाशात्सर्वमुत्पन्नमिति विस्तरेणोत्तरमुक्तमाचार्येण । ततश्च जगत्सत्यमित्यध्यवसीयते । न हि मिथ्याभूतस्योपादानप्रश्नः, प्रजापतिरुपादानमित्युत्तरं वा युज्यते । अध्यासाधिष्ठानमेव खलु प्रष्टव्यम् । शिष्येण जगत्सत्यत्वभ्रमेण तथा प्रश्नेऽपि तत्त्वविदाऽऽचार्येण तत्प्रतिषेधपूर्वकमधिष्ठानं खलु निर्विशेषं वक्तव्यम् । तदेवोक्तमिति चेन्न, अप्रतीतेः । लोके शुक्तेः रजतोपादानत्वव्यवहारस्याऽऽपण्डितपामरं क्वापि कोणेऽनुपलम्भेन तद्वाक्यस्य तादृशार्थप्रत्यायकतायाश्शपथैकनिर्णेयत्वात् । प्रमाणान्तरानुगुण्येन तस्य तदर्थकत्वोपपत्तिरिति चेन्न, निर्विशेषं ब्रह्म जगदध्यासाधिष्ठानं, रज्जुरिव सर्पाध्यासाधिष्ठानमित्यर्थकवाक्यशकलस्याप्यद्यापि भवताप्युपनिषत्सु तदुपबृंहणेषु वा संप्रतिपन्नेष्वनुपलम्भात् । प्रत्युत मृत्पिण्डघटादेः, वटबीजतद्वृक्षादेरेव च, तत्रतत्र कार्यकारणविषये दृष्टान्ततयोपन्यासात् । ब्रह्म विवर्तोपादानमिति तु केवलस्वेच्छामूलम्; न शास्त्रमूलम्; शास्त्रे ब्रह्मणि वा अन्यत्र वा, विवर्तोपादानत्वव्यवहारादर्शनात् । अतस्सत्यतयैव स्वेन ज्ञातस्य स्थूलस्य जगतस्सूक्ष्मावस्थं परिणाम्युपादानमेव वस्तु हिरण्यगर्भस्यापि कारणभूतं शिष्येण पृष्टम्। ब्रह्मैव तादृशं सूक्ष्मचिदचिद्विशिष्टमुपादानमिति तदुत्तरमित्येवास्थेयम् । कारणवाक्यान्तरैककण्ठ्याच्च । न ह्यत्रत्यप्रजापतिशब्दश्चतुर्मुखपरो भवितुमर्हति, 'यो ब्रह्माणं विदधाति पूर्वं' मित्यादिना तस्यापि कार्यत्वावगमात् । 'कारणं तु ध्येय' इति कारणविज्ञानं हि मोक्षसाधनम् । प्रष्टा च परं ब्रह्मान्वेषते, नत्ववरम् । किञ्च अत्रैव दशममन्त्रे 'आत्मानमन्विष्याऽऽदित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमे-

तस्मान्न पुनरावर्तन्त इत्युक्त्याऽप्ययस्योपक्रमवाक्यस्य परमात्मपरत्वमविचाल्यम् । साक्षान्मुक्तिकामं, परं ब्रह्मान्वेषमाणं प्रत्युत्तरदानावसरे आत्मानमन्विष्यादित्यं प्राप्नुवन्ति, प्राणसहचरितसर्वजीवानामाधारभूतममृतत्वाभयत्वविशिष्टं परमप्राप्यमेतदात्मतत्वं प्राप्य न पुनरावर्तन्त इत्युक्तावुभयोरेकविषयतायास्स्वरससिद्धत्वात् । परं ब्रह्मान्वेषमाणा इत्यन्विष्यमाणतयोपक्रान्तं परं ब्रह्म ह्यत्रात्मानमन्विष्येत्यात्मपदेनोच्यते; एतद्विज्ञानान्मुक्तिश्च । सा तु 'कारणन्तु ध्येय' इत्युक्त्या परमकारण विज्ञानादेवेति । उत्तरत्र तत्रतत्र प्रजापतिशब्दस्य संवत्सरादिशब्दसामानाधिकरण्यं, 'तस्मादिमाः प्रजाः प्रजायन्त ' इति तत्तत्पदार्थावस्थप्रजापतिसकाशात्तेते अर्था उत्पद्यन्त इति वचनञ्च, प्रजापतिशब्दस्य हिरण्यगर्भपरतां निवारयति, परब्रह्मकार्यभूते तस्मिन् तद्वाचकचिदचिद्वाचकशब्दसामानाधिकरण्यस्य, तत्तद्वाचकानां तत्पर्यन्तत्वस्य च हेतुभूतानां सर्वोपादानत्वसर्वशरीरित्वादीनामसंभवात् । प्रकारान्तरेण हिरण्यगर्भवाचकस्यैतदुपपादनं तु हिरण्यगर्गस्यापि दुश्शकमित्यलम् ।

एवं चतुर्थप्रश्ने जीवपरात्यन्तभेदस्स्फुटतरमुपलभ्यते । तत्र 'स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते' इति चेतनाचेतनरूपकर्तृकरणकर्मात्मकस्सर्वोपि प्रपञ्चः परमात्माश्रित इत्युक्तम् । इममेवार्थमुत्तरप्रश्नशेषो विस्तरेण प्रतिपादयति। तत्र ' पृथिवी च पृथिवीमात्रा चे ' त्यादिकं पूर्वं सर्वशब्दसङ्गृहीतमचेतनांशं विवृणोति ; 'एष हि द्रष्टे' त्यादिकं चेतनांशम् । 'स परेऽक्षरे आत्मनि सम्प्रतिष्ठते ' इत्येतच्च , अनयोर्द्वयोरपि परमात्माश्रितत्वं 'पर आत्मनि सम्प्रतिष्ठत ' इति पूर्वमुक्तं परमात्मनोऽक्षरशब्देन स्वरूपस्वभावाविकारराहित्यप्रतिपादनपुरस्सरं प्रकाशयति । तद्व्यतिरिक्तस्य सर्वस्य चेतनस्याचेतनस्य वा तदधीनविकारवत्त्वान्न तद्वेदनेन मुक्तिप्रत्याशा; परमात्मन एव सर्वकार्यकारणत्वात्तद्वेदनेनैव मुख्यमुक्तिरित्यक्षरपदाभिप्रायः । अत्र स इति तच्छब्दः ' पृथिवी च ' ' एष हि ' इत्याभ्यामुक्त-

चेतनाचेतनरूपप्रपञ्चपरः । स यो ह वै तदित्यादिकं तु सर्वाधार-तया पूर्वोक्तस्य परमात्मनः अच्छायत्वाशरीरत्वादिपरत्वौपायिकोपास्य-गुणविशेषप्रतिपादनपूर्वकं तादृशगुणविशिष्टपरमात्मोपासनस्य सार्वज्ञ्य-सर्वकामयुक्तत्वरूपां मुक्तिं फलमाह । श्लोकस्तूक्तार्थक इति सुस्पष्टम् । अतोऽत्र परं ब्रह्म जिज्ञासमानमत एव परममुक्तिकामं शिष्यं प्रति सर्व-चेतनाचेतनाधारत्वादिगुणविशिष्टपरमात्मोपासनं मोक्षसाधनतयोपदि-ष्टमाचार्येणेत्यस्यार्थस्य दुरपलपतया, जीवपरावत्यन्तभिन्नौ गुणजा-तञ्च पारमार्थिकं, अचेतनप्रपञ्चोपि तथैवेत्यंशो निष्कम्पसिद्धिक इति ध्येयम् । अत्रा चेतनस्येव चेतनस्यापि परमात्मनि संप्रतिष्ठितत्वे उच्यमाने, 'जलाधारशोषणे सूर्यप्रतिबिम्बस्य सूर्ये प्रवेशवद्ब्रह्मणि जीव-प्रवेश उच्यत' इति व्याख्यानं. स्वसिद्धान्तश्रद्धाविजृम्भितमत्यन्तास्व-रसं सर्वप्रमाणविरुद्धमुपपत्तिविहीनञ्चेति बोध्यम् । न हि प्रतिबिम्ब-स्य बिम्बे प्रवेशो नाम कश्चित्, वस्तुन एवाभावात् ! तत्सत्त्वाभ्युप-गमेपि स्वच्छद्रव्यबिम्बोभयसन्निकर्षाधीनसत्ताकस्य तस्य, तयोः अ-न्यतरस्य वाऽपगमे सत्ताभाव एव, नतु बिम्बे प्रवेशः, निर्युक्तिकत्वात्, तथाव्यवहाराभावात्, अविशेषादन्यत्रापि प्रवेशाभ्युपगमप्रसङ्गाच्च, तस्मान्निर्गमनाभावाच्च । अत इदं प्रकरणं परेषामत्यन्तप्रतिकूल-मिति ॥ (४) ॥

मुण्डकोपनिषदपि सर्वात्मना पराभिमतप्रमेयात्यन्तप्रतिकूलेति प्रत्यक्षम् । तत्र 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिप-श्यन्ति धीराः ॥' 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम् ॥' 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञान-मयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते ॥' इत्यादि प्रथममुण्डक-प्रथमखण्डे, 'तदेतत्सत्यम् । यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति'

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥' 'अतस्समुद्रा गिरयश्च सर्वे अस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपाः । अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥' इति द्वितीयमुण्डकप्रथमखण्डे, 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' इति तृतीयमुण्डकप्रथमखण्डे, 'यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥' इति तत्रैव द्वितीयखण्डे च श्रूयते । एभिर्वाक्यैः, नित्यत्वविभुत्वादिगुणविशिष्टं सर्वजगद्व्यापि सर्वजगदुपादानं स्वाभाविकसर्वज्ञत्वादिगुणविशिष्टं सर्वजगल्लयाधिकरणं विशिष्य समुद्रागिर्याद्युपादानं, उक्तसर्वोपादानत्वहेतुभूतसर्वान्तरात्मत्वविशिष्टं परमात्मरूपं तत्त्वं, उक्तसर्वजगदुपादानत्वतन्निमित्तत्वादिनिरतिशयगुणाप्राकृतस्वासाधारणदिव्यमङ्गळविग्रहविशिष्टपरब्रह्मसाक्षात्काररूप उपायः, पुण्यपापरूपकर्म, तत्कृतबहुविधनामरूपप्रहाणपूर्वकं परमपुरुषेण परमसाम्यापत्तिलक्षणदिव्यपुरुषप्राप्तिरूपः पुरुषार्थश्च प्रस्पष्टं प्रतीयते । केनापि प्रमाणेन कयापि युक्त्या वा, नास्यार्थजातस्य बाधलवोऽपि वक्तुं शक्य इति । यत्त्वत्रैव श्रुतं, 'विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति 'ब्रह्म वेद ब्रह्मैव भवती' ति च, तत् जीवस्य नामरूपप्रहाणेन परमात्मना सुदृढसंयोगपरं व्याख्येयम्, 'नामरूपाद्विमुक्त' इति अत्रैव सदृष्टान्तविशेषं पूर्वोत्तरयोर्विवरणात् । न हि नदीसमुद्रजलयोस्स्वरूपत ऐक्यं शक्यशङ्कम्, किन्तु नामरूपप्रहाणमेव तत्र । दृष्टान्तोपन्यासेन प्रतिपिपादयिषितेऽर्थे आदरातिशयो हि व्यज्यते ।

यत्तु 'नित्यं विभु' मित्यत्र विभुपदव्याख्यानं 'विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभु' रिति । तन्न. ब्रह्मादिस्थावरान्तरूपेण निर्विशेष निरवयव नित्यशुद्धब्रह्मणः परिणामायोगात् । तथासति यादवप्रकाशमतप्रवेशप्रसङ्गात्, तथाऽनभ्युपगमेनापसिद्धान्ताच्च, मृद्घट-

योरिव स्वरूपपरिणामस्थले कार्यकारणयोस्साजात्यस्यावश्यकतया जगद्ब्रह्मणोस्सत्यत्वमिथ्यात्वान्यतरप्रसङ्गाच्च । जगदध्यासाधिष्ठानं भवतीत्यर्थस्तु न पूर्वोक्तविवरणवाक्यात्प्रतीयते । नचानिर्वचनीये प्रमाणमस्ति । ततश्चैवं व्याख्यानमसमञ्जसमेवेति ।

यदपि व्याख्यानं 'यथोर्णनाभि' रित्यत्र, 'यथा ऊर्णनाभेस्तच्छरीराव्यतिरिक्तास्तन्तवः, यथा च पृथिव्याः व्रीह्यादिस्थावरान्तास्तदव्यतिरिक्ता ओषधयः, यथा च जीवतः पुरुषात्तद्विलक्षणानि केशलोमानि जायन्ते, तथा विलक्षणं सलक्षणञ्च जगदक्षराज्जायत' इति – न तत्रास्माकं किञ्चिदपि वक्तव्यमस्ति । सर्वथाऽस्मदिष्टत्वात् । परन्तु व्याख्यानमिदं कथं तदभिमतसाधकमिति न जानीमः । न च शुक्तिरजतादिदृष्टान्त इह दर्शितः। नूनमयमन्यथा नेतुमशक्य इत्यभिप्रायेणैव मन्त्रस्य पदार्थविवरणमात्रं कृतमिति मन्यामहे । अत्राक्षरशब्देन सूक्ष्मचिदचिद्विशिष्टब्रह्मण उपादानात् तत्राक्षरशब्दार्थत्रये विशेष्यांशस्य ब्रह्मणः, विशेषणीभूतस्याचिदंशस्य चिदंशस्य च कारणत्वप्रकारः दृष्टान्तत्रयेण क्रमेण दर्श्यत इत्यपि सुवचम् । अन्यदन्यत्र । एवं 'यस्सर्वज्ञ' इति मन्त्रव्याख्यानमपि लेशतोऽपि न तदनुकूलं दृश्यते, अपित्वस्मत्सिद्धान्तानुकूलमेव ।

यदपि 'यथा सुदीप्ता' दिति मन्त्रपूर्वार्धं यथावद्व्याख्याय 'तथाऽक्षरा' दित्युत्तरार्धव्याख्यानं तत्तात्पर्यवर्णनञ्च, 'भावाः जीवाः, यथा घटादिपरिच्छिन्ना सुषिरभेदा घटाद्युपाधिप्रभेदमनु आकाशाद्भवन्ति, एवं नानानामरूपकृतदेहोपाधिप्रभेदमनु जीवा अक्षरात्प्रजायन्ते । तत्रैवाक्षरे देहोपाधिविलयमनु लीयन्ते, घटादिविलयमन्विव सुषिरभेदाः । यथाऽऽकाशस्य सुषिरभेदोत्पत्तिप्रळयनिमित्तत्वं घटाद्युपाधिकृतमेव, तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रळयनिमित्तत्व' मिति । तदेतदतिविचित्रं व्याख्यानवैभवम् । श्रुतस्य दृष्टान्तविशेषस्य स्वप्रतिकूलत्वधियैव दृष्टान्तान्तरं स्वमनीषया कथञ्चित्सम्पाद्योपन्यस्तम् । तदप्यत्यन्तदुःस्थत्वान्न क्षणमपि जीवितुमर्हति । आकाशस्य घटरूपोपाध्यवच्छिन्नसुषिरभेदो-

त्पत्त्युपादानत्वतल्लयाधिकरणत्वयोस्सर्वथाऽसंभवात्, लोके 'आकाशात्सुषिरमुत्पद्यते, तत्र लीयते' इति कुत्रापि व्यवहारादर्शनात्, युक्तिविधुरत्वात्, उपलम्भविरोधाच्च। घटाकाशसंयोगे, निरवच्छिन्न आकाशे घटाद्युपाध्यन्तर्गतांशः परिच्छिन्नतया गृह्यते। स एव सुषिरभेद इत्युच्यते। घटादिनाशे तत्संयोगाभावेन तथा न गृह्यते। तत्र वस्तुतो घटादिगत एव परिच्छेदस्तदवच्छिन्नांशभेद आरोप्यते, न तु तच्छिद्रमाकाशाज्जायते तत्र लीयते वा इतीयमेव वस्तुस्थितिः। सर्वानुभवसिद्धमिममंशमपलप्य अनुपपन्नमनुपलब्धिपराहतश्चाकाशस्य सुषिरभेदोत्पत्तिप्रळयनिमित्तत्वं सिद्धवत्कृत्य दृष्टान्तविशेषोपन्यासः उपन्यसितुरतिसाहसिकत्वगतिमात्रस्वासिद्धान्तश्रद्धांश्च स्फोरयतीति विद्वांसो विदाङ्कुर्वन्तु। अत्र स्वसिद्धान्तानुरोधेन आकाशस्य घटाद्युपाधिकृतं सुषिरभेदरूपत्वमिव देहाद्युपाधिकृतमेव ब्रह्मणो जीवरूपत्वमिति वक्तव्ये 'अक्षराद्भावाः प्रजायन्ते' 'तत्र चैवापियन्ति' इति श्रुतिविरोधपरिजिहीर्षयैवाप्रसिद्धतरार्थसिद्धवत्कार इति रहस्यम्।

यच्च 'एतस्माज्जायते प्राण' इत्यादेर्व्याख्यानं 'यस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायते अविद्याविषयविकारभूतो नामधेयोऽनृतात्मकः प्राणः, न हि तेनाविद्याविषयेणानृतेन प्राणेन सप्राणत्वं परस्य स्यात्, अपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण पुत्रित्वं, अतोऽस्य निरुपचरितमप्राणादिमत्त्व'मिति। एवमुपर्यपि यत् 'तस्मादग्नि' रित्यादेः 'अतस्समुद्रा' इत्यन्तस्याक्षरोपादानत्वपरस्य व्याख्यानं प्रपञ्चमिथ्यात्वप्रतिपादनपरत्वेन–तदुभयमपि सर्वात्मनाऽसंबद्धम्। प्रथममन्त्रोक्तचेतनाचेतनात्मककृत्स्नभावसृष्टिप्रपञ्चनरूपत्वादस्य कृत्स्नखण्डस्य। 'एतस्माज्जायते प्राण' इत्यादिना प्राणादिकारणत्व उच्यमाने प्रकरणस्य प्राणादिमिथ्यात्वपरत्ववर्णनस्यात्यन्तविरुद्धत्वाच्च। प्राणाद्यसत्यत्वेनाक्षरस्य प्राणादिमत्त्वराहित्ये प्रतिपिपादयिषिते, प्राणादयो ब्रह्मण्यध्यस्ताः, अविद्याविषयाः, मिथ्याभूताः इत्यादिरूपेण तत्प्रतिपादनस्यैवोचिततया, परस्मात्प्राणा-

दयो जायन्ते इत्युक्तेस्सप्राणत्वादिभ्रमापादकत्वेनात्यन्तासंगतेः । त-तश्च 'अप्राणः' 'अमना' इत्येतत् प्राणायत्तस्थितिं मनआयत्तज्ञानञ्च निषेधति । 'पश्यत्यचक्षुस्स शृणोत्यकर्ण' इत्याद्यैकार्थ्यात् । प्राणमनसोरपि तत्कार्यत्वात्तत्संकल्पायत्तस्वरूपस्थितिप्रवृत्तिकत्वाच्च न तदायत्तस्थित्यादिकत्वं तत्कारणस्य सम्भवतीत्युपपादयन्नेव मन्त्रोऽयं प्रथमोक्तविश्वसृष्टिं प्रपञ्चयतीत्यभ्युपगन्तव्यम् । 'तस्मादग्निस्समिधः' 'तस्मादृचस्साम' 'तस्माच्च देवाः' 'तस्मात्सप्त प्राणाः' 'अतस्समुद्रा गिरयः' 'अतश्च सर्वा ओषधयः' इति पुनःपुनरत्यादरेण प्रतिमन्त्रं पञ्चम्यन्तेन प्रस्तुतमक्षरमुपादाय तस्य तत्तत्पदार्थोपादानत्वे प्रतिपादिते 'सर्वं ह्येतत्परस्मादेव पुरुषात्सर्वज्ञात्प्रसूतं, अतो वाचारम्भणं विकारो नामधेयमनृतं, पुरुष इत्येव सत्य' मिति प्रकरणतात्पर्यवर्णनं कथमिति चित्रीयते चेतः । 'वाचारम्भण' मित्यादिकन्तु तत्तत्प्रकरणानुगुणं तदभिमतासाधकं व्याख्यास्यते । किञ्च 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती' त्युपक्रमगतप्रश्नस्योत्तररूपेण प्रवृत्तमिदं प्रकरणमिति भवद्भिरप्युभ्युपगम्यते । इत्थञ्च कार्यवर्गस्य मिथ्यात्वे कारणविज्ञानेन कथं प्रपञ्चविज्ञानं सिद्ध्येत् । वस्तुनोऽभावे ज्ञानविषयत्वस्य दुरुपपादत्वात् । न हि लोके शुक्त्यादिविज्ञाने उत्पन्ने रजतादिविज्ञानमुत्पन्नमुपलभ्यते, उपपद्यते वा । कार्यकारणयोरेकद्रव्यत्वे हि तदुपपत्तिः । कस्य वा सत्यमिथ्यार्थयोरैक्यं सुसम्पादं स्यादिति । अत्रेदमवधेयम् – अत्र प्रथमतः कस्यैकस्य विज्ञानेन सर्वं विज्ञातं स्यादिति प्रश्नः । तदुत्तररूपेण प्रवृत्ते सन्दर्भे, 'अक्षरपुरुष एव सर्वस्यान्तरात्मतया तिष्ठति । अत एवाक्षरात्पुरुषात्सर्वं जायते । अतस्सर्वमिदं पुरुष एव । अतोऽक्षरपुरुषज्ञानेन तस्माज्जातं सर्वं ज्ञातं भवति' इत्युक्तमुपलभ्यते । 'यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या' दित्यादिकञ्च श्रुत्यन्तरम् । लोके मृत्सकाशाज्जातो घटः मृदात्मक इत्युपलब्धिव्यवहारौ । एकमृत्पिण्डारब्धानां घटशरावादीनां तत्पिण्डज्ञानेन तदैक्यात्तद्व्य-

त्वेन ज्ञातता । तथा व्यवहारश्च घटशरावादिकमुद्दिश्य 'इदं सर्वं पूर्वाह्ने केवलमृत्तिकात्वेन ज्ञातमेव मंये' ति । एवं कार्यकारणयोरैक्ये उभयसत्यत्वे चैव कारणज्ञानोत्पत्त्या कार्यज्ञानोत्पत्तिः; अनीदृशशुक्तिरजतादिस्थले तदनुत्पत्तिः । एवंसति 'सर्वमक्षरादुत्पद्यते, अतोऽक्षरव्यतिरिक्तं सर्वं मिथ्या। इत्थञ्चाक्षरज्ञानेन सर्वं विज्ञातं भवती' त्येतत्प्रकरणविवरणं सर्वथाऽनुपपन्नमिति । एतेनैव एतदुपनिषदि परोक्तं विरुद्धमन्यदपि निरस्तं वेदितव्यम् ॥ ५ ॥

माण्डूक्योपनिषद्यपि न परपरिकल्पितप्रमेयशरीरानुकूलमंशं पश्यामः; प्रत्युत तत्प्रतिकूलमेव । तत्र हि 'ओमित्येतदक्षरमिदं सर्वं; तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव॥' इति प्रथमतश्श्रूयते । इदं सर्वं जगत् ओङ्काररूपम्, ओङ्कारवाच्यमित्यर्थः । इदमेव विवृणोति 'भूत' मित्यादिवाक्यशेष इति 'तस्योपव्याख्यान' मिति श्रुतिरेव प्रतिपादयति । विशिष्टवेषेण वा, स्वरूपतो वा, अभूद्भवति भविष्यतीत्येवंरूपेण तत्तत्कालपरिच्छिन्नश्चेतनाचेतनात्मकं जगत्, उक्तरीत्या कालत्रयपरिच्छेदरहितमच्युतस्वरूपस्वभावकं सदैकरूपं परमात्मस्वरूपञ्च ओङ्कार एवेति तदर्थः । प्रणवान्तर्गताकारेण सर्वरक्षकस्य भगवतः, उकारेण देव्याः, मकारेण तदुभयशेषभूतस्य जीवोपलक्षितसर्वप्रपञ्चस्य च वाच्यत्वादिति इत्थञ्चास्माद्वाक्याच्चेतनाचेतनात्मकप्रपञ्चसद्भावः, तदवच्छेदककालत्रयसद्भावः, ब्रह्मणस्त्रिकालातीतत्वरूपधर्मसद्भावः, ओङ्काररूपवाचकसद्भावश्च प्रतीयते । एते चार्थास्सत्या एवेति चोत्सर्गसिद्धम्, बाधकलेशादर्शनात् । एवमत्र आत्मनश्चतुष्पात्त्वं प्रक्रम्य वैश्वानर तैजसप्राज्ञरूपपादत्रयं, तेषां पादानां जागरितस्वप्नसुषुप्तस्थानतां, तत एव तत्तत्स्थानानुभाव्यानुभवितृरूपप्रपञ्चवैशिष्ट्यञ्च प्रतिपाद्य पश्चात् प्रणवेऽप्यकारोकारमकाररूपाणि मात्राशब्दितान्यक्षराणि विभज्य तेषां क्रमेण प्रागुक्तपादत्रयात्मत्वकण्ठोक्त्यापि प्रपञ्चसत्त्वमेव स्पष्टं बुध्यते ।

एवं पादत्रयेण चेतनाचेतनात्मकप्रपञ्चवैशिष्ट्योक्त्यनन्तरमेव च, 'एष सर्वेश्वर एष सर्वज्ञ एषोन्तर्याम्येष योनिस्सर्वस्य प्रभवाप्ययौ हि भूताना'मिति सकलप्रपञ्चनिर्वाहव्यापृतस्यैव प्रागुक्ततां स्पष्टयति । न ह्यत्र निर्विशेषपरतया व्याख्यानसंभव इति स्फुटम् ।

यत्तु सर्वंह्येतद्ब्रह्म अयमात्मा ब्रह्म सोयमात्मा चतुष्पादि'त्युपरितनवाक्यम्, तन्न परानुकूलम् । 'सन्मूलास्सोम्येमाः– ऐतदात्म्यमिदं सर्वम्' 'सर्वं खल्विदं ब्रह्म तज्जला' नित्यादिश्रुत्यन्तरानुसारात्, सर्वं समाप्नोषि ततोऽसि सर्वः' 'सर्वगत्वादनन्तस्य सएवाहमवस्थितः' 'अन्यश्च राजन्स परस्तथान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' ॥ 'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः॥' इत्याद्युपबृंहणशतानुसाराच्च सर्वमिदं ब्रह्मकार्यत्वाद्ब्रह्मान्तर्यामिकत्वाच्च ब्रह्मात्मकम्; अयं जीवात्मा च विशिष्टवेषेण ब्रह्मकार्यत्वात्स्वरूपतो ब्रह्मान्तर्यामिकत्वाच्च ब्रह्मात्मकः, सोऽयं परमात्मा वक्ष्यमाणपादचतुष्टयविशिष्ट इत्येव व्याख्येयत्वात् ।अत्र हि सर्वस्य यादृशं, तादृशं आत्मनोपि ब्रह्मसामानाधिकरण्यमिति दर्श्यते । अनेन च'भूत'मित्यादिना पूर्वोक्तं चेतनाचेतनात्मकं जगत् त्रिकालातीतब्रह्मवस्तेन सहोपादानमात्रात्स्वतन्त्रमिति न भ्रमितव्यं, सर्वात्मना परतन्त्रत्वादित्युक्तं भवति । अन्यथा 'एतद्ब्रह्मे'ति सामानाधिकरण्येन जगद्बाधप्रत्याशायां पुनरपि 'चतुष्पादि'ति निर्विशेषे पादचतुष्टयवैशिष्ट्याभिधानासङ्गतेः ।

यदपि 'नान्तःप्रज्ञं न बहिःप्रज्ञम्' इत्यादिना तुरीयपादनिरूपणम्–तत्रापि न तन्मतानुकूल्यमेव प्रतीयते; प्रातिकूल्यमपि; 'न प्रज्ञानघन'मिति आत्मनश्चिद्रूपत्वाभावस्य 'नाप्रज्ञ'मिति ज्ञातृत्वाभावविरहस्यचोक्तेः । एवं तस्यैवात्मनः 'स आत्मा स विज्ञेय' इत्यात्मत्वविज्ञेयत्वाभ्यामुपसंहाराच्च । आप्नोतीति ह्यात्मा, ततश्च व्याप्यसर्वपदार्थसाचिव्यमात्मन उक्तं स्यात् । विज्ञेयत्वञ्च विशेषेण ज्ञेयत्वम्; तच्च 'अयमीदृशाकारवा' नित्याकारकज्ञानविषयत्वमेव । ततश्चानेकविशेष-

पक्रमः । अत एवास्य प्रकरणस्यानन्दवल्लीति विशिष्य नाम। ‘स एको ब्रह्मण आनन्द’ इत्यादिना मीमांस्यमानानन्दस्वरूपकथनम्। अनन्तरं ‘स य एवंवित्’ ‘अस्माल्लोकात्प्रेत्य’ ‘आनन्दमयमुपसंक्रामती’ ति पुनरपि निरुक्तानन्दादिगुणविशिष्टब्रह्मोपासकस्य तादृशब्रह्मरूपफलनिर्देशः। एतत्सर्वार्थसङ्ग्राहकं ‘ब्रह्मविदाप्नोति पर’ मित्येतद्वाक्यमुपक्रमोपक्रमभूतं पूर्वमेव प्रदर्शितम्। एवमत्यन्तस्वरसे बाधलेशरहिते प्रकरणार्थे सर्वेषां स्वानुभवसाक्षिकं जाग्रत्यपि यदवतारणमस्य प्रकरणस्य – ‘अज्ञाननिवृत्त्यर्थं विधूतसर्वोपाधिविशेषात्मदर्शनार्थमिदमारभ्यते ब्रह्मविदाप्नोति परमित्यादीति, तत् प्रकरणेऽस्मिन्कस्य वाक्यस्य पदस्य वा कीदृशमर्थमभिप्रेत्येति न जानीमः। ‘ब्रह्मविदाप्नोति पर’ मित्युपक्रमवाक्य एवौपचारिकार्थकत्वं यदुक्तम्, तदसङ्गतम् उपक्रमएवौपचारिकप्रयोगस्यायुक्तत्वात्, मुख्यार्थग्रहणे बाधकाभावाच्च। ‘सोऽश्नुत’ इत्यादिना सकलगुणविशिष्टब्रह्मानुभवरूपत्वविवरणविरोधाच्च। परमार्थब्रह्मस्वरूपं नास्तीत्यभावदर्शनलक्षणया अविद्यया अनात्मभूतान्नमयादीनामात्मत्वप्रतिपत्तौ, अन्नमयादिभ्यो नान्योऽहमस्मीत्यभिमान एव ब्रह्मणोऽनाप्तिः। परमार्थतः सर्वात्मभूतं ब्रह्मास्तीति दर्शनरूपया विद्यया निर्विशेषब्रह्माहमस्मीति ज्ञानमेव ब्रह्मण आप्तिरिति हि तत्र तैर्निष्कृष्टम्। एवंसत्येतद्विवरणविरोधो दुष्परिहर इति। यत् तद्वाक्यविवरणं सर्वशून्यत्वपर्यवसायि व्याख्यानिर्माणचतुराणाम्, ‘सह – युगपत्। एकयोपलब्ध्या ब्रह्मस्वरूपाव्यतिरिक्तया; यामवोचाम, सत्यं ज्ञानमनन्तमिति, एतत्तदुच्यते ब्रह्मणा सहेति। ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्वान्कामान्निरवशिष्टान्भोगान्भुङ्क्ते’ इत्यादि। तन्नूनमेतद्वाक्यं सर्वथा स्वाभिमतार्थपरतया व्याख्यातुमशक्यमिति व्यनक्ति। इदं श्रुतिवाक्यमियं व्याख्या च कथं तदभिमतां निर्विशेषब्रह्मभावात्मिकां मुक्तिं प्रतिपादयति; प्रतिकूलोपलम्भात्। ‘ब्रह्मभूतः ब्रह्मस्वरूपेणैवे’ त्युक्तिमात्रेण न हि सा सिद्ध्येत्, निरवशिष्टान्भोगानित्यस्याप्युक्तेः।

सः, सर्वान, कामान्, विपश्चिता, ब्रह्मणा सह, अश्नुते, इतीमानि सप्त पदानि श्रूयन्ते । किमेतेषां पृथक्पृथक्किञ्चिदर्थपरत्वमस्ति न वा; अस्ति चेत्, मुक्तस्सर्वज्ञत्वादिगुणविशिष्टब्रह्मणा सह मुक्तस्य सर्वभोगानुभवरूपताया एव प्रतीत्या न तदभिमतमुक्तिसिद्धिः ! व्याख्यातृभिश्च सर्वेषामपि पदानां सार्थक्यमेवाश्रितम् । न चेत्, स्फुटं वैयर्थ्यमिति ।

यत्त्वस्य वाक्यस्य स्वाभिमतमुक्तिपरत्वप्रत्याशया व्याख्यानमानन्दगिरीये–'ये सुखविशेषाः हिरण्यगर्भाद्युपाधिषु भोग्यत्वेनाभिमताः तेषां सर्वेषां ब्रह्मानन्दाव्यतिरेकाद्ब्रह्मभूतो विद्वान् सर्वानेवानन्दानश्नुत इत्युपचारेण बहुवचनमित्यर्थ' इति । तदतिसाहसम्, 'सर्वान्कामानश्नुत' इत्यस्मात् अपरिच्छिन्नमेकमानन्दमश्नुत इत्यर्थप्रतीतेस्सर्वथैवाल्भ्यमानत्वात् । घटमठकुसूलाद्यवच्छिन्नगगनबहुत्वाभिप्रायेण 'सर्वाणि गगनानी' ति व्यवहारस्य कुत्राप्यदर्शनात् । सर्वशब्दबहुवचनोभयात्रगतस्वाभाविककामबहुत्वत्यागायोगात् । शास्त्रैकगम्यनित्यशुद्धब्रह्मणः लोकसिद्धतत्तत्क्रियाविशेषघनाढ्यत्वादिजन्य–शास्त्रमूलहेयत्वानर्थावहत्वादिप्रतिपत्तिविषय–सुखसमुदायाव्यतिरिक्तत्वस्याप्रामाणिकत्वादनुपपन्नत्वाच्चेतननानात्वग्राह्यनन्यथासिद्धप्रमाणविरुद्धत्वाच्च । एवं व्याख्यानेऽपि 'भक्षितेऽपि लशुने न शान्तो व्याधि' रिति न्यायेन स्वसमीहितासिद्धिश्च; मुक्तः अखण्डमानन्दमनुभवतीत्युक्तेपि मुक्तेर्बहुविधभेदसाचिव्यप्रसङ्गात् । ब्रह्मरूपाखण्डकेवलानन्दतया स्थितिर्हि तन्मते मुक्तिः । महता प्रयासेन कर्तृकर्मक्रियाणां मध्ये कर्मरूपस्यानन्दस्यैक्यसम्पादनेऽपि कर्तृक्रिययोः कयाऽपि युक्त्याऽनपोदितत्वेन तद्रूपभेदस्य मुक्तावनपायात् । 'ब्रह्मणा सहे' त्युक्तौ ब्रह्मणेत्यस्य ब्रह्मभूत इति, सहेत्यस्य युगपदिति नार्थवर्णनं श्रोतृकर्णारुन्तुदमेव ! परजीवभेदे श्रुतिलोकसिद्धे, 'सहयुक्तेऽप्रधाने' इति शास्त्रे च जागरूके विद्वान्ब्रह्मणा सह काम्यमानांस्तद्गतान् सर्वान् गुणाननुभवतीति यथाश्रुतार्थे सर्वभोग्यजातविशिष्टं ब्रह्मानुभवतीति फलितार्थे च स्वरसे न युक्तं श्रुतिकदर्थनम् । किञ्च 'ब्रह्मणे' त्यस्य

ब्रह्मभूत इत्यर्थाभ्युपगमेऽपि न स्वेष्टमुक्तिसिद्धिः, 'विपश्चिते' ति ब्रह्मविशेषणसत्त्वेन सर्वज्ञत्वरूपविपश्चित्त्वस्यापि तदानीमपरिहार्यत्वात् । निर्विशेषब्रह्मभावेऽत्र विवक्षिते तद्वैयर्थ्यं ह्यवर्जनीयमित्यलम् ।

'यदिदं किञ्च तत्सत्यमित्याचक्षत' इत्यत्र यद्व्याख्यानं 'यस्मात् यत्किञ्चेदं सर्वं सच्छब्दवाच्यं ब्रह्माभवत्, तद्व्यतिरेकेणाभावान्नामरूपविकारस्य । तस्मात्तद्ब्रह्म सत्यमित्याचक्षत' इति । अनेन 'यदिदं किञ्च' त्यस्य सत्यन्निरुक्तानिरुक्तादिभिरभेदेनान्वयोऽङ्गीकृत इति प्रतीयते ; 'यत्किञ्चेद' मिति पूर्ववाक्यार्थानुवादकोटावुक्तवाक्यर्थस्याप्युपादानात् । इदञ्चायुक्तम् ।'सच्च त्यच्चाभव' दित्यादेः 'सत्यमभव' दित्यन्तस्य निराकाङ्क्षतया तेन सह पार्थक्येन तदनन्तरमुपात्तस्यान्वयवर्णनासम्भवात् । अपिच 'तत्सत्य' मित्यत्र तच्छब्दस्य यत्तदोर्नित्यसंबन्धेन यच्छब्दसापेक्षतया पूर्वं यच्छब्दस्य च श्रवणात्तयोः परस्परान्वय एवावश्याङ्गीकार्यः । न हि लोके 'घटादिर्मृण्मयो दृश्यते । योऽयम्, तं देवदत्तमाचक्षत' इत्यादौ 'योऽय' मित्यादेर्वाक्यान्तरान्वयः प्रतीयते । अत एवं क्लिष्टगत्याश्रयणं, सयच्छब्दाद्युपात्तं यदिदं चेतनाचेतनात्मकं जगत् तत्सर्वं कालत्रयेऽप्यबाधितत्वेन सत्यमिति तत्त्वविद आचक्षत इति स्वरसप्रतीतार्थप्रद्वेषमूलमेवेति ।

यच्च 'आनन्दमयमात्मानमुपसंक्रामती' त्यस्य प्राप्तृप्राप्यैक्ये कर्मकर्तृभावविरोधमाशङ्क्य महता प्रयासेन 'या हि ब्रह्मविद्यया स्वात्मप्राप्तिरुपदिश्यते साऽविद्याकृतस्यान्नादिविशेषात्मन आत्मत्वेनाध्यारोपितस्यानात्मनोऽपोहार्था' इति अन्नमयाद्यनात्मस्वात्मत्वभ्रमनिवृत्तिरूपोपसङ्क्रान्तिपरतया व्याख्यानम् — तदप्यनुपपन्नम् — 'एवंविदात्मानमुपसङ्क्रामती' त्युक्ते अस्यार्थस्य केनाप्युपायेन सम्पादयितुमशक्यत्वात्, स्वाभाविकजीवपरभेदग्राहिप्रमाणशतविरोधात्, 'अस्माल्लोकात्प्रेत्ये' त्यंशस्य वैयर्थ्यप्रसङ्गात्, तत्परिकल्पितप्रमेयशरीरस्य प्रमाणपदवीदवीयस्त्वाच्च । किं बहुनोक्तेन, महता सन्दर्भेण गुणभूतानन्दस्य मीमांसनात् 'स एको ब्रह्म-

ण आनन्दः' 'आनन्दं ब्रह्मणो विद्वानि' त्यनन्यथासिद्धव्यतिरेकनिर्देशात् 'आनन्दमयमात्मानमुपसङ्क्रामति' 'आनन्दमयमात्मानमुपसङ्क्रम्य' इति प्राचुर्यार्थकमयट्श्रवणाच्चात्र प्रकरणे आनन्दोपलक्षितस्य ब्रह्मसंबन्धिनस्सकलकल्याणगुणजातस्य प्राधान्यतस्तात्पर्यविषयत्वावगमेन स्वप्नेऽपि तत्त्यागस्मरणायोगात् सकलकल्याणगुणविशिष्टं ब्रह्मोपासीनश्शरीरान्निष्क्रम्य तादृशमेव ब्रह्म प्राप्नोतीत्यर्थ एव प्रतिपिपादयिषित इत्यविचाल्यमिदम्। विस्तरोऽस्मत्कृतपरपक्षनिराकृतौ द्रष्टव्यः। षष्ठः प्रश्नस्तु नारायणोपनिषत् सर्वपरविद्योपास्यं सर्वान्तर्यामिणं नारायणमद्भुतगुणाकरं प्रतिपादयतीति तत्र परमतविरोधस्सुस्पष्टः॥ ७॥

एवं बृहदारण्यकोपनिषदपि परप्रतिकूलेत्यत्र न विशयलेशोऽपि विचारयतां संभवति। तथाहि-तत्र तृतीयाध्याये चतुर्थब्राह्मणे 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत असौनामायमिदंरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदंरूप इति। स एष इह प्रविष्ट आनखाग्रेभ्यः, यथा क्षुरः क्षुरधानेऽवहितस्स्याद्विश्वंभरो वा विश्वम्भरकुलाये तं न पश्यत्यकृत्स्नो हि स' इत्यादिकं श्रूयते। अस्य वाक्यस्य कारणवाक्यत्वञ्च 'सदेव सोम्येदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'ब्रह्मवा इदमग्र आसी' दित्यादिकारणवाक्यान्तरसारूप्यात्सुस्पष्टम्। कारणञ्च 'स कारणं करणाधिपाधिप' इत्यादि प्रमाणाज्जीवातिरिक्तश्चेतनविशेष इत्यास्थेयम्। अव्यक्तपर्यायोऽव्याकृतशब्दोऽत्र, 'तमसो भूतादिः' 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः' 'अस्मान्मायी सृजते विश्वमेतत्' 'मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचर' मित्यादिप्रमाणात्परिदृश्यमानस्थूलावस्थप्रपञ्चस्य कारणभूतां तत्सूक्ष्मावस्थां तमःप्रधानाक्षराव्यक्तादिपदवाच्यां त्रिगुणात्मिकां प्रकृतिमाचष्ट इत्यपि तत एव सारूप्यादास्थेयम्। तादृशाव्यक्तस्य चेतनविशेषं प्रति शरीरत्वं 'यस्याव्यक्तं शरीरं यस्य मृत्युश्शरीर' मित्यादिश्रुतिसिद्धम्। तत्परिणामभूतस्थूलावस्थप्रपञ्चस्यापि 'यस्य पृथिवी-

शरीर' मित्यादिना तत्त्वं सिद्धम् । शरीरवाचकानाञ्च शरीरिपर्यन्तत्वं 'चत्वारः पञ्चदशरात्रादेवत्वं गच्छन्ती' त्यादिशास्त्रात्, 'देवदत्तोऽहं जानामी' त्याद्यबाधितलोकव्यवहाराच्च सिद्धम् । एवं सर्वशरीरितया, सर्वकारणतया च प्रमाणप्रतिपन्नश्चेतनविशेषो नारायण इत्यपि 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः नारायणाद्ब्रह्मा जायते' इत्यादिश्रुतिसिद्धम् । इत्थञ्च 'तद्धेद' मिति वाक्यस्य परिदृश्यमानस्थूलावस्थजगच्छरीरकं नारायणाख्यं ब्रह्म, तर्हि तदा सृष्टेः प्राक्काले अतिसूक्ष्मावस्थप्रकृतिशरीरकमासीत् । तादृशं ब्रह्म पश्चान्महदहङ्कारादिक्रमेण स्थूलप्रपञ्चविशिष्टमात्मानमकरोदित्यर्थ एवाऽवश्याङ्गीकार्यः । अस्याऽव्याकृतशब्दस्य तच्छरीरकपरमात्मपरत्वे श्रुत्यन्तरपर्यन्तानुधावनमसहमाना श्रुतिरेवेयं तत्र युक्तिं प्रदर्शयति – 'स एष इह प्रविष्ट आ नखाग्रेभ्य' इत्यादिना । तस्य चायं भावः–अव्यक्तपरिणामभूते स्थूलप्रपञ्चे 'आत्मैवेदमग्र आसी' दिति अत्रैव प्रस्तुतस्यात्मनोऽत्राव्याकृतशब्दितस्यान्तर्यामितया कार्त्स्न्येन प्रविष्टत्वात्कारणदशायामपि तत्प्रवेशस्य सिद्धतयाऽव्याकृतस्य तच्छरीरत्वेनात्मपर्यन्तत्वं स्थितमेवेति । तत्र प्रवेशे दृष्टान्तद्वयमाह–'यथा क्षुर' इत्यादिना । 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मे'ति श्रुत्यन्तरञ्च । एवं सर्वान्तर्यामिणं तिलतैलवद्दारुवह्निवच्च सर्वव्याप्तं परमात्मानं यो न जानाति सोऽसत्कल्प इति 'तं न पश्यत्यकृत्स्नो हि स' इत्यस्यार्थः । अत्र 'स' इत्युक्त्या य इत्यध्याहार्यम् । 'प्राणन्नेव प्राणो नाम भवति वदन् वाग्' इत्यादिकं भगवतो नामरूपवत्त्वात्मकं कार्यप्रपञ्चरूपत्वमुक्तमेव प्रतिपादयति । एवमेव सर्वेषामपि कारणवाक्यानामर्थोऽभ्युपगन्तव्यः, सर्वशाखाप्रत्ययन्यायात् । एवं स्थितेऽपि महता ग्रन्थसन्दर्भेण यदुक्तमत्र श्रीशङ्कराचार्यैः, तत्सारांशमात्रमर्थत उद्धृत्य किञ्चिदुच्यते । 'अत्र तत्पदमप्रत्यक्षबीजावस्थजगत्परम् । इदम्पदं व्याकृतनामरूपात्मकसाध्यसाधनलक्षणजगत्परम् । तदिदंपदयोः परोक्षप्रत्यक्षावस्थजगद्वाचकयोस्सामानाधिकरण्यात्परोक्षप्रत्यक्षावस्थस्य ज-

गत ऐक्यमवगम्यते । अत्र निर्हेतुककार्यसिद्ध्यनुपपत्त्या सामर्थ्यादाक्षिप्तो नियन्ता जनयिता कर्तेति तद्गतकरणव्यापारेण, जगतस्स्थूलतया व्यक्तीभावः। नामरूपात्मकं जगदिदमेवमज्ञाताद्ब्रह्मण उत्पन्नमिति ब्रह्ममात्रमेव, यथा जलोत्थं फेनादि जलमात्रम् । अत एव ब्रह्मज्ञानबाध्यश्च । स्वतोनित्यशुद्धबुद्धमुक्तस्वभावः परः अव्याकृते आत्मभूते नामरूपे व्याकुर्वन्ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु कर्मफलाश्रयेष्वशनायादिमत्सु प्रविष्टः । प्रागुत्पत्तेरनुपलब्ध आत्मा पश्चात् कार्ये सृष्टे बुद्धेरन्तर उपलभ्यमानो जलादौ सूर्यादिप्रतिबिम्बवत् कार्यं सृष्ट्वा प्रविष्ट इव लक्ष्यते । एतादृशप्रवेश एवात्र 'स एष इह प्रविष्ट' इति, स्थलान्तरे 'तदेवानुप्राविशत्' अनेन जीवेनात्मनानुप्रविश्ये'त्यादावुच्यते' इत्याद्यर्थोऽत्र वर्णितः । अत्र ब्रूमः 'तद्धेद' मित्यत्र तत्पदपरामृष्टं वस्तु किं विवक्षितम्, किं केवलाज्ञानं, उत शुद्धब्रह्म, अथाज्ञानविशिष्टं ब्रह्म? आद्ये द्वितीये च अपसिद्धान्तो बाधश्च । न हि तावन्मात्रस्य जगत्कारणत्वमिष्यते । शुद्धस्य परिदृश्यमानस्थूलप्रपञ्चाभेदो बाधितश्च । अज्ञातब्रह्मोत्पन्नत्वोक्तिविरोधश्च । तृतीये सामर्थ्यात्कर्त्राक्षेपकथनमसङ्गतम् । विशिष्टे विशेष्यांशस्य कर्तृरूपत्वोपपत्तेः । शुद्धस्य न तत् संभवतीति चेत् – तर्हि विशिष्टकार्यं प्रत्यन्यस्यैव कस्यचित्कर्तृत्वमेष्टव्यमिति शुद्धचैतन्यस्याजागळस्तनायमानत्वप्रसङ्गः । शुद्धचैतन्यसन्निधानमात्रमज्ञानस्य कार्यरूपेण परिणामहेतुरिति न वैफल्यादिप्रसङ्ग इति चेन्न – तथासत्यज्ञातब्रह्मोत्पन्नत्वव्यवहारायोगात् । अज्ञानमात्रोत्पन्नं हि तदा कार्यम् । अत्र (४-१) 'स यथोर्णनाभिस्तन्तुनोच्चरे' दिति वाक्यव्याख्यानावसरे 'यस्मादात्मनस्स्थावरजङ्गमं जगदिदमग्निविस्फुलिङ्गवद्व्युच्चरति, यस्मिन्नेव च प्रलीयते जलबुद्बुदवत्, यदात्मकञ्च वर्तते स्थितिकाले, तस्यात्मनो ब्रह्मण' इति तैरेवोक्तत्वात्कार्यस्यापि ब्रह्मात्मकत्वाभ्युपगमप्रतीतेस्तद्विरोधश्च । नह्यज्ञानमात्रस्य जगद्रूपेण परिणामे तस्य जगदात्मकत्वोक्तिसम्भव इति । सन्निधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गश्च । कर्तुरभावात्तदप्रसङ्ग इति चेन्न–कदाचिदविद्यमानस्य कर्तुर्विना कारणमुत्पत्त्ययोगात् । कारणं विद्यत

एवेति चेत्-तत्किं नित्यं, अनित्यं वा; आद्ये नित्यसर्गप्रसङ्गो दुर्वारः। अन्त्येऽपि तदुत्पादकं वक्तव्यम्। शुद्धचैतन्यस्यैव तदुत्पादकत्वे पूर्वमपि तदुत्पत्तेरवर्जनीयतया नित्यसर्गप्रसङ्ग एव। शुद्धस्योत्पादकत्वमपि न संभवति। तस्य तत्संभवे जगदुत्पादकत्वमेव तस्याभ्युपगन्तुं युक्तमिति कर्त्रन्तराद्यभ्युपगमो व्यर्थः। अन्यदेव कर्त्रुत्पादकमिति चेत्तत्राप्युक्तविकल्पेनानवस्था। एवं कर्तृनित्यत्वानित्यत्वयोरपि दोषा बोध्यः। किञ्च शुद्धचैतन्यातिरिक्तः कर्ता किं सत्यः, उत मिथ्याभूतः। आद्ये अद्वैतहानिः। अन्त्ये तस्याध्यासाधिष्ठानं वक्तव्यम्। चैतन्यमेवाधिष्ठानमिति चेन्न। कर्तुः कर्तृत्वविशिष्टचैतन्यात्मकतया स्वस्य स्वाध्यासाधिष्ठानत्वायोगात्। कर्तृत्वमात्राध्यासे तुल्यन्यायतया सर्वजगदध्याससंभवेन कर्त्रन्तरवैयर्थ्यप्रसङ्गात्। सर्वजगदध्यासेनैवोपपत्तौ न हि सर्वजगत्कर्ता कश्चिदपेक्षणीय इति।

यदुक्तम् 'अज्ञाताद्ब्रह्मण उत्पन्नं ब्रह्ममात्र तदज्ञानबाध्यञ्चे' ति—तदयुक्तम्। न हि भवन्मते यादवप्रकाशमत इव जलात्फेनमिव ब्रह्मण इदमुत्पन्नम्। विवर्तोपादानं ब्रह्मेति हि त्वन्मतम्। तथासति फेनस्य फेनत्वावस्थाप्रहाणपूर्वकं सलिलत्वेन स्थितिवज्जगतोऽपि स्थूलरूपत्वप्रहाणेन कारणात्मना स्थितेरभ्युपगन्तव्यतया जगद्ब्रह्मणोरैक्येन जगतस्सत्यत्वप्रसङ्गश्च। अज्ञानाख्यदोषवशेन ब्रह्मणि जगदध्यस्तमिति वदन्नेव कथमज्ञाताद्ब्रह्मणो जगदुत्पद्यत इति वदतीति न विद्मः। स्वरूपपरिणाम सूक्ष्मचिदचिद्विशिष्टपरिणामवादिनावेवेत्थं व्यवहर्तुमर्हतः, 'ब्रह्मणो जगदुत्पद्यत' इति। अत एव न तदज्ञानबाध्यत्वमपि वक्तुं युक्तम्।

यदपि 'स एष इह प्रविष्ट' इत्यत्र प्रविष्टपदार्थवर्णनम् — तदप्यसङ्गतम्। अत्यन्तास्वरसत्वात्। 'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयति' 'अन्तःप्रविष्टश्शास्ता जनानां' 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानी' त्यादिप्रमाणसहस्रेण चेतनमचेतनञ्चान्तःप्रविश्य परमात्मा नियच्छतीत्यर्थसिद्ध्या प्रतिबिम्ब-

वृत्तान्तस्य कुत्राप्यदर्शनाच्च । कर्मवश्यानां सर्वेषां चेतनानां तत्तत्कर्मानुगुणदेहविशेषभाजां देहैकदेशहृदयाख्यप्रदेशविशेषावच्छिन्नस्सन् परमात्मा तत्तत्कर्मानुगुणं सङ्कल्पमात्रेण तान् प्रवर्तयतीतीश्वरस्सर्वभूतानामित्यस्यार्थः । न हि परमात्मा अवरात्मनि तं नियच्छंस्तिष्ठतीत्युक्ते परमात्मा बुद्ध्याद्युपाधौ प्रतिबिम्बित इति तद्वाक्यार्थं कोऽपि प्रतीयादिति । अत्र देहानां कर्मफलाश्रयत्वाशनायादिमत्त्वयोः कथनमप्यनुपपन्नम् , तयोश्चेतनधर्मत्वात् ! नूनमियमुक्तिश्चेतनान्तरप्रद्वेषकृतैवेति ।

यत्त्वत्रैव ब्राह्मणे उपक्रमे 'स हाऽयमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति, तत एवाऽस्य भयं वीयाय.... द्वितीयाद्वै भयं भवती' ति वाक्यविवरणं, 'मद्व्यतिरिक्तवस्त्वन्तराभावात्कुतो हेतोर्मम भयं जातम् । द्वितीयवस्तुसत्त्वे हि भयसंभव इति तत्त्वज्ञानमवाप । तत एवाऽस्य भयं नष्टम् । द्वितीयाद्धि भयं भवति, तदभावे कथं तद्भवेदि' ति — तदप्यनुपपन्नम् । तस्य हिरण्यगर्भस्याद्वैतसाक्षात्काराद्भयनिवृत्त्यभ्युपगमे अनुपदमेव तस्यैव 'नैव रेमे' इत्यादिना अरतिरिरंसाप्रतिपादनविरोधात् । न हि तत्त्वदर्शिनस्तत्सम्भवः । प्रारब्धवशात्तदनुवृत्त्यङ्गीकारे भयमपि तथैवानुवर्तेतेति भयनिवृत्तिकथनमनुपपन्नमेव स्यात् । तथाचायमर्थो वाच्यः — प्रथमतो हिरण्यगर्भस्स्वस्यासहायत्वं दृष्ट्वा भीतो बभूव । अनन्तरं मदन्यस्य कस्यचिद्विरोधिनस्सत्त्वे खलु तस्माद्भेतव्यं, न पुनरसहायत्वमात्रेणेति पर्यालोचयामास । ततोऽस्य भयं नष्टम् । लोकेऽपि विरोधिदर्शनादेवासहायस्य भयं भवति, नासहायत्वमात्रेणेति । इत्थञ्चात्राद्वैतसाक्षात्कारकथाया न प्रसक्तिः । तस्मात् 'द्वितीयाद्वै भयं भवती' ति वाक्यमात्रमवलम्ब्य भयनिवृत्तिकथनस्थलेषु सर्वत्र स्वव्यतिरिक्तवस्त्वन्तराभावो विवक्षित इति वादोऽत्यन्तबल्बज एवेति ध्येयम् ॥ ८ ॥

अस्यामेवोपनिषदि चतुर्थाध्याये पञ्चमब्राह्मणे, परमात्मनस्सर्वचेतनाचेतनान्तर्यामितया तद्वैलक्षण्यं स्वाभाविकं विस्तरेण प्रतिपाद्यते । तत्र हि चतुर्दश पर्यायाः सन्ति । तत्र त्रयोदशभिस्सर्वाचेतनोपलक्षण-

तया पृथिव्यादिकतिपयाचेतनान्तर्यामित्वं तद्वैलक्षण्यञ्च प्रतिपाद्यते। चतुर्दशेन जीवान्तर्यामित्वं तद्वैलक्षण्यञ्च। तत्रायं प्रथमः पर्यायः 'इयं पृथिवी सर्वेषां भूतानां मधु, अस्यै पृथिव्यै सर्वाणि भूतानि मधु, यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषः, अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व' मिति। एवमेव सर्वेपि पर्याया दृश्यन्ते। अत्र पृथिवीपदस्थाने जलादिवाचकतत्तत्पदानि, तथा 'अध्यात्म' मित्यस्मादनन्तरश्रूयमाणशारीरपदस्थाने तेजोमयादिपदसामानाधिकरण्येन तत्रतत्र मधुत्वेन रूपिततत्तत्पदार्थसम्बन्धयर्थान्तरविशिष्टयत्किञ्चिदर्थवाचकतत्तत्पदप्रयोगः इतीदमेव वैषम्यम्। अस्य चायं निष्कृष्टोऽर्थः। पृथिवी सर्वभूतमधु, सर्वमपि भूतं पृथिवीमधु। पृथिव्या भूतानाञ्चोपजीव्योपजीवकभावेन परस्परमधुत्वम्। अस्यां पृथिव्यामन्तर्यामितयाऽवस्थितस्स्वयंप्रकाशज्ञानमयो मरणादिधर्मशून्यो यः पुरुषः, यश्चायमध्यात्मं शरीरान्तर्यामी तेजोमयत्वादिविशिष्टः पुरुषः, अयमेव सः, यस्तावत् 'आत्मा वा अरे द्रष्टव्य' इत्यात्मतया निर्दिष्टः। पृथिवीशरीरान्तर्यामी द्रष्टव्यतयात्मपदनिर्दिष्टश्चैक एवेति यावत्। 'एतदमृत' मित्यादिना निर्दिष्टं 'सर्वं खल्विदं ब्रह्मे' ति निर्दिष्टञ्चेदमेव ब्रह्मेति। उत्तरपर्यायेष्वप्येवमेवार्थस्तत्तदानुगुण्येनोह्यः। एवमनेन प्रथमपर्यायेण पुरुषविशेषस्य पृथिवीशरीररूपाचेतनद्रव्यान्तर्यामित्वमुक्तं भवति। एवमुपरितनपर्यायेष्वपि प्रतिपर्यायं जलरेतसो रग्निवाचो र्वायुतद्विशेषप्राणयोरित्येवं द्वयोर्द्वयोरचेतनयोरन्तर्यामित्वं तस्य प्रतिपाद्यत इति ध्येयम्। इदमेव ब्राह्मणं 'यः पृथिव्यां तिष्ठ' न्नित्याद्यन्तर्यामिब्राह्मणं विवृणोति। अत्र पुरुषस्य पृथिव्यादौ स्थितिमात्रमुक्तम्। तत्र तु स्थितस्य पुरुषस्य पृथिव्याद्यन्तरत्व–तदवेद्यत्व–तच्छरीरकत्व–तन्नियन्तृत्वान्युक्तानीति। इत्थञ्च तदनुरोधेनात्र पुरुषस्य पृथिव्यादौ वर्तमानत्वं तदन्तर्यामित्वेनैवेति बोध्यम्। एवं पृथिव्यादिमानुषपर्यन्तपर्यायैः परमात्मनोऽचेतनवैलक्षण्यं प्रतिपाद्य चतुर्दशेन

चेतनान्तर्यामितया तद्वैलक्षण्यं प्रतिपादयति – अयमात्मा सर्वेषां भूताना मित्यादिना । पूर्ववदेवार्थः । अत्र पर्याये मधुत्वेन रूपितजीवात्म-सामान्यातिरिक्तस्य जीवत्वेन सदृशस्य परमात्मनियाम्यस्य तत्सम्बन्धिनः कस्यचिद्वस्तुन एवाभावेनाध्यात्ममित्याद्यनुक्तिः । अचेतनत्व-व्याप्यपृथिवीत्वादिपुरस्कारेण तत्रतत्राचेतनविशेषोपादानात् शरीराद्यचेतनविशेषान्तरस्य पुरुषनियाम्यत्वोक्तिस्संभवति । अत्र तु जीवात्मत्वरूपसामान्यधर्मपुरस्कारेणैव जीवात्मनः अयमात्मेत्युपादानान्न तद्व्यतिरिक्ततत्सम्बन्धिजीवात्मविशेषसम्भव इति कथं तदुपादाय तस्य नियाम्यत्वमुच्येत । अत्र मधुत्वेन रूपितवस्तुन अध्यात्मानन्तरमुपादेय-वस्तुनश्च परस्परसादृश्यप्रयोजकत्वेनाचेतनत्वमेव श्रुतिविवक्षितमिति गम्यते, तस्यैव सर्वत्रानुगतत्वात् । अत्रापि यदि अध्यात्ममित्युक्त्वाऽनन्तरं किञ्चिदुपादेयं स्यात् , तदा तेन जीवात्मत्वरूपेणैव मधुत्वरूपितपदार्थसदृशेन भवितव्यम्; नाऽऽकारान्तरेण; उपनिषत्सु अचेतनत्वावरचेतनत्वेश्वरत्वरूपेणैव तत्त्वविभजनात् । एतेन स्वयंप्रकाशत्वेन सदृशस्य धर्मभूतज्ञानस्य सिद्धान्तेऽभ्युपगमात्तेन रूपेण सादृश्यमादाय 'यश्चाध्यात्मं ज्ञानीय' इति कुतो नोक्तमिति शङ्का परास्ता— धर्मभूतज्ञानस्याचेतनतया चेतनत्वेन सादृश्यासंभवात् ! इत्थञ्चास्मिन चतुर्दशे पर्यायेऽयमर्थस्सिध्यति – पृथिव्यादिमानुषपर्यन्तेष्विव कस्मिंश्चिदात्मनि तेजोमयत्वादिगुणविशिष्टो निरुपाधिकपुरुषपदवाच्यः 'सर्वं खल्विदं ब्रह्म' 'एतदमृतमेतदभयमेतद्ब्रह्मे' त्यादिवाक्यान्तरप्रतिपाद्यः कश्चिदात्माऽन्तर्यामितया वर्तते । अयमेव 'आत्मा वा अरे द्रष्टव्य' इति मैत्रेयीब्राह्मणे मोक्षसाधनीभूतश्रवणमनननिदिध्यासनविषयतया निर्दिष्ट आत्मेति । इत्थञ्चात्राऽऽधारतया निर्दिष्ट आत्मा जीव इति, आधेयतया निर्दिष्टः परमात्मा परं ब्रह्म नारायण इति, स च पृथिव्यादिसर्वाचेतनजाताद्बद्धमुक्तनित्यरूपात्रिविधचेतनजाताच्चात्यन्तविलक्षण इति चतुर्दशपर्यायनिष्कृष्टार्थः । इममेवात्मानं सुस्पष्टं प्रतिपादयति पञ्चदशे

'स वा अयमात्मे' त्युत्तरं वाक्यम् । तत्र 'अयमात्मे' ति चतुर्दशपर्यायपर्यन्तसन्दर्भेण चेतनाचेतनात्यन्तविलक्षणतया प्रतिपादितमात्मानं 'स वा अयमात्मे' त्यनूद्य तस्य सर्वभूताधिपतित्व – सर्वभूतराजत्व – सर्वप्राणलोकदेवभूतात्माधारत्वानि विधीयन्त इति । अन्तर्यामिब्राह्मणेपि 'स ते अन्तर्याम्यमृत' इति प्रतिपर्यायमुक्तम् । तत्र च ते इति पदं नाचेतनमात्रवाचि, अपितु तद्विशिष्टाभिमुखचेतनवाचि, 'तत्त्वमसी' त्यत्र त्वंपदवत् । ततश्च ते इति व्यतिरेकनिर्देशेन चेतनान्तर्यामित्वं निष्प्रकम्पं सिध्येदेव । तस्मात् 'भोक्ता भोग्यं प्रेरितारञ्च' 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'द्वा सुपर्णा' 'ऋतं पिबन्तौ' 'समाने वृक्षे पुरुषो निमग्नः .... अन्यमीशं' 'स ब्रह्मवित्सलोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्ववित्' इत्यादाविवास्मिन्नपि ब्राह्मणे स्वाभाविकश्चिदचिदीश्वरभेदस्साम्राज्यमकुतोभयमनुभवतीति सिद्धम् ॥

'स ब्रह्मवित्स आत्मविदि' त्यत्र परैरेव 'ब्रह्मवित् = परमात्मवित्, आत्मवित् = कर्तृत्वभोक्तृत्वविशिष्टं तेनैवान्तर्यामिणा नियम्यमानमात्मानं वेत्ती' ति व्याख्यातम् । अतोऽत्र जीवपरभेदस्स्फुटप्रतीतिक इति तेषामप्याशय इत्युन्नीयते । न हि–ब्रह्मैवाविद्यया जीवभावं गतं, बुद्ध्याद्युपाधिषु प्रतिबिम्बितं चैतन्यमेव जीव इत्यादिवादानुकूलमिदं व्याख्यानं योजयितुं शक्यम् – परस्परभिन्नयोर्युगपद्वर्तमानयोरेव नियन्तृनियम्यभावसंभवात् । लोके तथैव दर्शनाच्च । बिम्बप्रतिबिम्बयोर्नियन्तृनियम्यभावव्यवहारस्य कुत्राप्यदर्शनात् । सङ्कल्पात्मकज्ञानघटितनियन्तृत्वस्य शुद्धचैतन्यात्मके ब्रह्मणि सर्वात्मनाऽसम्भवात् । उपहितं तु नान्तर्यामि भवितुमर्हति, अन्तर्यामिविज्ञानाद्बन्धनिवृत्तिश्रवणानुपपत्तेः । नह्यशुद्धज्ञानान्मुक्तिसम्भव इति ॥

अत्र श्रीशङ्कराचार्यैः प्रकरण–स्वारस्य–प्रमाणान्तर– युक्तिविरुद्धं केवलस्वकपोलकल्पितञ्च बहुभाषितम् । तत्र किञ्चिदेवोद्धृत्य प्रतिविधीयते । यदुक्तम् – 'पूर्वत्र मैत्रेयीब्राह्मणे अमृतत्वसाधनतयाऽऽत्मनो

दर्शनश्रवणमनननिदिध्यासनानि 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यनेनोक्तानि। तत्र मननं तर्केण कार्यम्। स च तर्कस्तत्रैव 'आत्मैवेदं सर्व' मित्यनेनोक्तः। उक्ततर्कस्यात्मैकसामान्यत्वमात्मैकोद्भवत्वमात्मैकप्रळयत्वञ्चेति हेतुरपि तत्रैवोक्तः। अनेन मधुब्राह्मणेन तादृशहेत्वसिद्धिशङ्का निराक्रियते। तन्निराकरणप्रकारश्चेत्थम्—लोके परस्परोपकार्योपकारकभूतं यद्वर्तते, तत् एककारणकमेकप्रळयञ्च दृष्टम्, यथा स्वप्नादि। एवं पृथिव्यादिलक्षणं जगदपि परस्परोपकार्योपकारकभूतत्वात्पूर्वोक्तत्रयवदभ्युपगन्तव्यमिति। यद्वा 'आत्मैवेदं सर्व' मिति प्रतिज्ञातस्य हेतुमुक्त्वा तन्निगमनमनेन ब्राह्मणेन क्रियते। इयं पृथिवी ब्रह्मादिस्तम्बपर्यन्तप्राणिनां मधु कार्यम्। यथा एको मध्वपूपोऽनेकैर्मधुकरैर्निर्वर्तितः एवमियं पृथिवी सर्वभूतनिर्वर्तिता। तथा सर्वाणि भूतानि पृथिव्याः मधु कार्यम्। यश्चायं पुरुषोऽस्यां पृथिव्यां तेजोमयत्वादिगुणकः, यश्चायमध्यात्मं शारीरः शरीरे भवः तेजोमयत्वादिगुणकपुरुषः, स च लिङ्गाभिमानी, स च सर्वभूतानामुपकारकत्वेन मधु; सर्वाणि च भूतान्यस्य मधु। पृथिवी—सर्वभूत—पार्थिवपुरुष—शारीरपुरुषरूपमेतच्चतुष्टयमेकं मधु—सर्वभूतकार्यम्; सर्वाणि च भूतान्यस्य कार्यम्। तस्मादस्य जगतः परस्परोपकार्योपकारकभूतत्वादस्य एककारणकत्वादिकमाश्रयणीयम्। ततश्च तदेकमेव कारणं परमार्थसद्ब्रह्म। इतरत्तु कार्यजातमनृतमेवेति प्रथमपर्यायार्थः। 'अयमेव स योऽयमात्मे' ति। 'इदं सर्वं यदयमात्मे' ति प्रतिज्ञात आत्मा अत्र चतुर्धोक्तो भेद एवेत्यर्थः। 'अयमात्मे' ति चतुर्दशपर्याये आत्मशब्देन सर्वात्मा प्रत्यस्तमिताध्यात्माधिभूतादिसर्वविशेषस्सर्वभूतदेवतागणविशिष्टः कार्यकरणसङ्घात उच्यते। 'यश्चाऽयमस्मिन्नात्मनि तेजोमय' इत्यादिना तस्मिन्नात्मन्यमूर्तरसात्मकः पुरुष उच्यते। 'यश्चायमात्मे' त्यनेन यदर्थोऽयं देहलिङ्गसङ्घातः, स परिशिष्टो विज्ञानमय आत्मा उच्यते। 'स वा अयमात्मे' ति तदुत्तरवाक्यस्थात्मपदेन पूर्वपर्यायेष्वनुपदिष्टः,

अन्त्यपर्याये ‘ यश्चायमात्मे ’ त्युक्तो विज्ञानमयः यस्मिन्नात्मनि खिल्यदृष्टान्तवचसा प्रवेशितः, तेन परेणात्मना तादात्म्यं गतो विद्वानुच्यते । अविद्याकृतकार्यकारणसङ्घातात्मकोपाधिविशिष्टे जीवे परमार्थात्मनि ब्रह्मणि ब्रह्मविद्यया प्रवेशिते स एवाऽयमात्मा सर्वभूताधिपतित्वादिविशिष्टो विद्वान्ब्रह्मविन्मुक्तो भवति इत्येतद्वाक्यार्थ ’ इति ।

तदिदं श्रुतिवाक्यविवरणमतिविचित्रम् । अत्रानेकदोषसद्भावेऽपि ग्रन्थविस्तरभिया कतिचिदेव दोषा उद्भाव्यन्ते । तथाहि–सर्वेष्वपि पर्यायेषु मधुचतुष्टयकल्पनमयुक्तम् , मधुद्वयस्यैव श्रवणात् । ‘यश्चायमस्यां पृथिव्यां’ ‘यश्चायमध्यात्मं शरीर’ इति यच्छब्दाभ्यां निर्दिष्टस्य ‘अयमेव स’ इत्यत्रेदंशब्देन परामर्शस्यैव स्वरसतः प्रतीत्या तत्त्यागायोगाच्च । पुरुषश्चेत्येतावन्मात्रोक्तौ कथञ्चित्तत्कल्पनसम्भवेऽपि यच्छब्दश्रवणेन विनाऽध्याहारं तदयोगात् । सः सर्वेषां भूतानां मधु इतयितः पदजातस्य द्विस्सकृद्वाऽध्याहारानुषङ्गाभ्युपगमेऽत्यन्तगौरवाच्च । किञ्च मधुद्वयमात्रेणापि भवदभिमतसिद्ध्या, वाक्यस्य स्वरसतोऽन्यार्थकत्वप्रतीत्या चाश्रुतमधुद्वयान्तरकल्पनं निर्निबन्धनम् । अपिच पार्थिवात्मा, शारीरात्मेत्यात्मभेदकल्पनं निष्प्रमाणम् । अन्तर्यामिब्राह्मणादावेकस्यैवात्मनः पृथिव्यादिसर्ववृत्तित्वश्रवणात् । तस्य च ‘ सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण ’इति श्रुत्या पृथिव्यादिसर्ववर्तित्वेऽपि तद्गतदोषलेशसंम्बन्धरहितनारायणरूपैकपुरुषविशेषात्मकत्वप्रतीत्या तत्तत्स्थानसम्बन्धनिबन्धनपुरुषभेदकल्पनाया अयुक्तत्वाच्च । अतोऽत्र पृथिवी, शरीरमिति विशेषभेदमात्रमेव, पुरुषस्त्वेकरूपो नारायण एवेत्येव प्रतिपत्तव्यम् । एतेन कार्यकरणसङ्घातो मानुषादिजातिविशिष्टः कश्चिदात्मा, प्रत्यस्तमितकतिपयविशेषः कतिपयविशेषसहितः कार्यकरणसङ्घातः कश्चिदात्मा, तस्मिन्नात्मनि वर्तमानोऽमूर्तरसः कश्चिदात्मा, परिशिष्टो विज्ञानमयः कश्चिदात्मा, परः कश्चिदात्मेति बह्वात्मवर्णनमपि व्युदस्तं वेदितव्यम् । एवं परिकल्पने स्वेच्छातिरेकेण

प्रमाणलेशस्याप्यनुपलम्भात् । कार्यकरणसङ्घातशब्दस्यात्मशब्देन सामानाधिकरण्यमपि सर्वात्मना दुरुपपादम् , आत्मशब्दस्य चेतने रूढत्वात् , कार्यकरणसङ्घातपदस्यातत्परत्वात् । 'इदं सर्वं यदयमात्मे'ति प्रकृतात्मैव चतुर्थाऽत्रोच्यते इत्यप्यसङ्गतम् । पृथिवीशरीरयोरचेतनविशेषयोरात्माऽभेदायोगात् । ननु पार्थिवाद्यात्मभेददूषणं सामानाधिकरण्यादिदूषणञ्चास्मत्सिद्धान्तापरिज्ञानमूलमिति चेन्न — भवत्सिद्धान्तपरमरहस्याभिज्ञैरेवास्माभिर्दूषितत्वात् । इदञ्च परस्तात्स्पष्टीभविष्यति । यदपि – पृथिव्यादिलक्षणं जगत्परस्परोपकार्योपकारकभूतत्वादेककारणकमेकसामान्यात्मकमेकप्रळयञ्च भवितुमर्हति । लोके तादृशस्य तथात्वदर्शनादिति । तत्रेदं वक्तव्यम्–व्याप्तिरियं कुत्र गृहीता? स्वम इति चेत्–तस्य परस्परोपकार्योपकारकभूतत्वं कुतः प्रमाणात्सिद्धम्? उपकार्योपकारकभावो वा कीदृशः? । कार्यकारणभावात्मक इति चेन्न — परस्परं तदसम्भवात् । ब्रह्मकारणत्वाक्षेपासम्भवाच्च । परस्परातिशयाधायकत्वरूप इति चेत्तदपि न – भिन्नकारणकेष्वपीदृशोपकार्योपकारकभावस्य सत्त्वात् । अत इदं दुर्वचमेवेति । इत्थञ्च सर्वेषामपि पर्यायाणां, पृथिव्यादेः परस्परोपकारकभूतत्वप्रतिपादनद्वारा एककारणकत्वादितत्परत्ववर्णनमत्यन्तास्वरसमसङ्गतञ्चेति ध्येयम् ।

यदपि – 'अयमात्मेत्यत्रात्मपदं प्रत्यस्तमितकातिपयविशेषसर्वभूतादिविशिष्टात्मपर' मित्यादि । तत्सर्वमसङ्गतम् । अन्तर्यामिब्राह्मणे पृथिव्याद्यचेतनविशेषान्तर्यामित्वं परमात्मन उक्त्वा 'य आत्मनि तिष्ठ' न्निति सकृदेवैकस्मिन्नात्मनि परमात्मनस्स्थितिरुक्ता । तद्वदत्रापि पृथिव्यादिमानुषान्तेष्वचेतनविशेषेषु परमात्मनस्स्थितिमुक्त्वाऽनेन पर्यायेण 'यश्चायमस्मिन्नात्मनी' ति जीवात्मनि स्थितिरुच्यत इति सहृदयसाक्षिकं प्रतीयते । अतः 'अयमात्मे' ति स एवोच्यत इत्यभ्युपगन्तव्यम् । 'अयमेव स ' इत्यादेरर्थस्तु पूर्वमेवोक्तः । जीवान्तर्यामितया एतत्पर्यायप्रतिपादितस्तेजोमयत्वादिगुणविशिष्टः पुरुष एव ' स वा अयमात्मे ' ति

पञ्चदशवाक्यस्थात्मपदेन सर्वभूताधिपतित्वादिविधानायानूद्यत इति तु पूर्वमेवोक्तम् । तेजोमयः पुरुष एव चतुर्दशभिः पर्यायैस्सर्वचेतनाचेतनविलक्षणतया प्राधान्येन प्रतिपादित इति ' स वा अयमात्मे ' त्येतत्तमेव परामृशतीति वाक्यसन्दर्भविद्भिरभ्युपेयम् । एवं स्थितेऽप्यात्मपदमत्र विद्वत्परमिति यद्विवरणं, तत्केनोपायेनेति न विद्मः । अत्र ब्रह्मविदः प्रसङ्गाभावात् । सर्वचेतनाचेतनविलक्षणः पुरुष एव ब्रह्म, स एवामृतं, स एव सर्वमिति खलु पूर्वं निगमितम् । अत्र विद्वत्परत्ववर्णनापेक्षया साक्षान्मुक्तिप्रतिद्वन्द्विसर्वभूताधिपतित्वादिविशेषणनिर्देशानुरोधेनात्मपदस्याविद्वत्परत्ववर्णनमेव युक्तमुत्पश्यामः । तस्याकाण्डे ब्रह्मवित्परत्वे कथं तस्यां दशायां तस्य सर्वाधिपतित्वादिकं श्रूयमाणमुपपद्येत । अत्र स्वयमेव तस्य विद्वत्परत्वमुपवर्ण्य तथासति विशेषणनिर्देशासङ्गतिं सञ्चिन्त्य ' अस्मिन्नात्मनि सर्वभूतान्यात्मान्तं समर्पित ' मिति वाक्ये अन्ततो जाग्रत्यपि अत्र क्वापि कोणेऽपरिदृश्यमानं ' ब्रह्मविन्मुक्तो भवति ' ति पदत्रयं स्वेच्छया सम्पाद्य वाक्यार्थः परिपूरित इति स्फुटं विदुषामिति । तस्मादियमप्युपनिषत्परपक्षप्रतिकूलेति सुस्पष्टम् ॥ ९ ॥

अथ छान्दोग्योपनिषदपि तादृश्येवेति निरूप्यते । तत्र हि ( ३ - १४ ) ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' ' मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः ' ' एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा ' ' एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षात् ' ' सर्वकर्मा .... अवाक्यनादर एष म आत्माऽन्तर्हृदय एतद्ब्रह्म एतमितः प्रेत्याभिसम्भवितास्मि इति । यस्य स्यादद्धा न विचिकित्साऽस्ती ' ति श्रूयते । तस्यायं निष्कृष्टोऽर्थः – उपासकः सर्वमिदं जगत् ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वात्तदधीनजीवनत्वाच्च ब्रह्मात्मकमित्यनुसन्धानजनितशान्तिविशिष्टस्सन्, एष ' परमात्मा मम हृदये उपासनार्थं व्रीह्याद्यपेक्षयाप्यणुत्वेनावस्थितः । पृथिव्याद्यपेक्षया महत्त्वमेव तस्य स्वाभाविक आकारः । स एव च मम

प्राप्याकारः । सर्वकर्मत्वादिविशिष्टः परमात्मा परं ब्रह्म परमकारुण्येन मदुज्जिजीवयिषया मद्धृदये सन्निहितः । अस्माल्लोकाद्दिव्यलोकं गत्वा ईदृशमेव परमात्मानं प्राप्स्यामी'त्यनुसन्दधानः मनोमयत्वादिगुणविशिष्टं परमात्मानमुपासीतेति । अत्र ब्रह्मणो जातं ब्रह्मणि लीनं ब्रह्माधीनस्थितिकं जगत्, अत एव ब्रह्मात्मकमित्युक्त्या कारणस्य ब्रह्मण इव कार्यभूतस्य जगतः, नियन्तुस्तस्यैव नियाम्यस्यास्य सत्यत्वम्, उपादानोपादेयभावनिबन्धनं शरीरात्मभावनिबन्धनञ्च जगद्ब्रह्मणोस्तादात्म्यम्, उपास्यस्य परब्रह्मणो मनोमयत्वादिपरमार्थभूतानेकगुणविशिष्टत्वम्, उपास्यादुपासकस्य स्वाभाविको भेदः, तस्य पृथिव्याद्यपेक्षयापि स्वाभाविकं महत्त्वं, कर्मलोकाद्दिव्यलोकं गतस्यैव मुख्यमुक्तिरित्येतेऽर्थास्सुस्पष्टं प्रतीयन्ते । लोके च 'मृदो घटो जायते, मृदि घटो लीयते, अतो मृदात्मको घट'इति व्यवहारः स्फुटं दृश्यते । शास्त्रेण च 'विष्णोरुद्भूतं जगत्, अन्तर्यामिणि तत्रैव च नियाम्यतया स्थितं; जगल्लयाधारश्च सः, अत एव जगदपि विष्णु'रित्युच्यते 'विष्णोस्सकाशादुद्भूत'मित्यादिना । स्थितिनिबन्धनसामानाधिकरण्यमपि लोकदृष्टमेव यथा घटो नील इति। यथा च मृदि घटत्वस्थितिनिबन्धनः मृद्धट इति व्यवहारः, तथैव सूक्ष्मचिदचिद्विशिष्टब्रह्मणि स्थूलचिदचिद्वैशिष्ट्यस्थितिनिबन्धनो 'जगच्च स इति'व्यवहारः । चिदादिवैशिष्ट्यं हि चिदादिमत्त्वम्। तद्वत्त्वञ्च तदेवेति। नच घटत्वं मृत् इति व्यवहाराभावात् तद्वदेव जगत् (चिदचिच्च) स इति व्यवहारोपि न युक्त इति शङ्क्यम्; वैषम्यात् । घटत्वादिशब्दो हि निष्कर्षकशब्दः, न तु जगदादिशब्दः । 'देवोऽहं जानामी'त्यबाधितव्यवहाराच्छरीरात्मभावनिबन्धनमपि तादात्म्यमभ्युपगन्तव्यमिति पूर्वमेवोक्तम् । उपादानस्येवोपादेयस्यापि सत्यत्वमबाधितत्वतौल्याल्लोकत एव सिद्धम् । न हि कश्चित् मृदं सत्यतया जानानः घटं मिथ्यात्वेन प्रत्येति । ततश्च 'सर्वं खल्विदं ब्रह्म तज्जला' नित्यस्य उक्तार्थ एवोपपन्न इति ध्येयम् ।

यत्त्वत्र परैरुक्तम् । 'अत्र ब्रह्मपदं सोपाधिककारणभूतब्रह्मपरम् । जगतो ब्रह्मरूपत्वञ्च तज्जत्वतल्लत्वतदनत्वैः । मनोमयत्वादिगुणा अत्र विवक्षिता इत्येतत्पुनरपि सर्वकर्मत्वादेरुपादानात्सिद्ध्यति । 'एषः' 'मे' – 'एतमभिसम्भवितास्मी' - त्युपासकोपास्ययोः, प्राप्तृप्राप्ययोश्च भेदस्स्पष्टं निर्दिश्यते । इतः प्रेत्याभिसम्भवितास्मी' त्युक्त्या परमात्मप्राप्तेः विद्यमानशरीरत्यागानन्तरभावित्वं प्रतीयते । अत इदं प्रकरणं सगुणब्रह्मोपासनपरमेवे' ति । तदिदं वयमपि सर्वथाऽऽद्रियामहे । सयुक्तिकं भेदस्य स्थापितत्वात् । प्रकरणमिदमद्वैतपरतया सर्वात्मना नेतुमशक्यमिति तदीयाभिप्रायावगमात्सन्तुष्यामश्च । परन्तु वस्तुतो निर्विशेषमेव ब्रह्म; अतः प्राप्तृप्राप्यादिभेदो न वस्तुतोऽस्तीतीममंशं सिद्धवत्कृत्य प्रकरणमिदमर्वाचीनफलसाधनं सगुणब्रह्मोपासनं विधत्त इत्युक्तिमेव निषेधामः । तादृशांशेऽनन्यथासिद्धप्रमाणलेशाभावेन तस्य केवलस्वमनीषाविभवार्जितत्वाध्यवसायात् । यानि तु कानिचिद्वाक्यानि तदनुगुणानीव दृश्यन्ते तान्यपि यथावस्थितार्थकानि व्याख्यास्यन्ते । जगदिदं ब्रह्मण्यध्यस्तं, तस्मान्मिथ्याभूतमिति वदन्नेव मृषावादी, जगद्ब्रह्मणो जातं ब्रह्मणि लीनं ब्रह्माधीनस्थितिकं, अतस्त्रिष्वपि कालेषु ब्रह्मात्मकमिति कथं व्याहरतीति तदातदा विस्मिताः स्मः । अत्रेदं पदार्थतत्त्वविवेचनाविचक्षणैरवधेयम्– इमे तावद्वाव्यकाराः जगतो ब्रह्मण उत्पत्त्यादिप्रतिपादनप्रकरणेषु 'सलिलात्फेनबुद्बुदादिकमिव ब्रह्मणो जगदुद्भवति । तत्र तदिवचात्रैतल्लीयते । तत् तदात्मकमिव एतदेतदात्मकम् । इत्थञ्च सलिलव्यतिरेकेण फेनबुद्बुदाद्यभाव इव ब्रह्मव्यतिरेकेण जगदभावस्सिद्ध्यती' ति प्रतिपादयन्ति । तत्र तदुपात्तदृष्टान्तविषये वस्तुस्थितिस्तावदियम् । महासलिले कदाचिद्वाय्वभिघातादिकारणवशात्कश्चित्सलिलांशः बुद्बुदादिरूपेण परिणमते । क्रमेण बुद्बुदत्वाद्यवस्थां विहाय पूर्वसलिलांश एव भवति । बुद्बुदत्वाद्यवस्थायामपि सलिलरूपमेव तत्, न द्रव्यान्तरं किञ्चित् । सलिलत्वेनैवोपलम्भात्, अन्यथाऽनुपलम्भाच्च । बुद्बुदादिकं सलिल-

मेवेत्यबाधितव्यवहाराच्च । एवञ्च तत्र बुद्बुदाद्युपादानभूतसलिलांशस्य, तदुपादेयभूतबुद्बुदादिकस्य, बुद्बुदत्वफेनत्वादिरूपावस्थाया वा न मिथ्यात्वं वर्णयितुं शक्यम्; प्रतीयमानेषु तेषु नेदमिति बाधादर्शनेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वासम्भवात् । अपितु सलिलत्वाद्यवस्थापेक्षयापि कादाचित्कत्वेनानित्यत्वमेव बुद्बुदत्वाद्यवस्थाया इति । तद्वद्दार्ष्टान्तिकेऽपि ब्रह्मणो जगदुत्पद्यत इति व्यवहारेण जगतः ब्रह्मणैक्यं, तद्वत्सत्यत्वं, ब्रह्मत्वं, ब्रह्मत्वापेक्षया कादाचित्कत्वेनानित्यघटपटादिरूपप्रपञ्चावस्थात्वं, एतत्प्रहाणपूर्वकं पुनस्तादृशब्रह्मत्वमितीदमेव सिद्ध्येत्; न पुनर्ब्रह्मण्यध्यस्तत्वं, तन्मूलमिथ्यात्वञ्च । ततश्च 'सलिलव्यतिरेकेण बुद्बुदाद्यभाववत् ब्रह्मव्यतिरेकेण जगदभाव' इति 'ब्रह्मणो जगज्जायते' त्यादेश्शतशस्स्वयं भाववर्णनेपि न तत्सिद्धेरवकाशलेशः । एवं स्थितेऽपि प्रमेयतत्त्वे 'ब्रह्मणो जगज्जायते' इत्यादिश्रुतिशतगतव्यवहारेभ्यो भीतभीतैर्यैस्तादृशव्यवहाराणां स्वाभिमतसिद्धान्तविशेषविरोधनिरोधाय नियमेन प्रयतितव्यम्, त एवामी निर्भीकास्स्वयमपि तादृशं व्यवहारं कर्तुमारभन्त इतीदं परेषां तादृशश्रुतिविरोधाभावप्रदर्शनाय वा, अन्यस्मै कस्मैचिद्वेति विमृशन्तोपि नान्तं गच्छन्तीति ॥ १० ॥

अस्यामेव (४) 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेतिहोवाच एतदमृतमेतदभयमेतद्ब्रह्म' 'एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति' 'एष उ एव वामनिः एष हि सर्वाणि वामानि नयति' 'एष उ एव भामनिः एष हि सर्वेषु लोकेषु भाति' 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न, अर्चिषमेव तेऽभिसम्भवन्त्यर्चिषोऽह....अमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति श्रूयते । तत्रायं निष्कृष्टोऽर्थः–सर्वनियन्तृत्वनिरतिशयभोग्यत्वदुःखासम्भिन्नत्वनिरतिशयबृहत्त्व सत्यसङ्कल्पत्वरूपसंयद्वामत्व स्वाश्रितशोभनधीप्रापकत्वरूपवामनीत्व सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वरूपभामनीत्वगुणविशि-

हृमक्षिण विद्यमानं परमात्मानमुपासीत । तथोपासकस्तादृशं परमात्मानं श्रीवैकुण्ठापरपर्यायदिव्यलोकविशेषे दिव्यविग्रहविशेषादिविशिष्टतया विद्योतमानमर्चिरादिमार्गेण प्राप्य स्वयमपि तदसाधारणाकारातिरिक्तसंयद्वामत्वादिगुणविशिष्टस्सम्पद्यते; नच पुनः कदापि संसारसम्बन्धगन्धवान्भवतीति। सत्यत्वज्ञानत्वादिस्वरूपनिरूपकधर्मविशिष्टस्य तत्तत्प्रकरणोक्तगुणविशेषविग्रहविशेषस्थानविशेषादिविशिष्टस्य परब्रह्मशब्दितस्य परमात्मनस्तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपमुपासनमेव परविद्या । सा च द्विविधा स्वशरीरकत्वेनोक्तगुणविशिष्टस्योपासनं, स्वस्योक्तगुणविशिष्टब्रह्मशरीरत्वेनोपासनञ्चेति । अत्र पूर्वा दहरविद्याशाण्डिल्यविद्यादिरूपेण नानाप्रकारा । परा तु परमात्मप्रकारकस्वविशेष्यकोपासनात्मिका पञ्चाग्निविद्येत्युच्यते । उभयेषामप्युपासकानामर्चिरादिमार्गेणैव श्रीवैकुण्ठाख्यदिव्यलोकगमनम्। दिव्यदेशप्राप्त्यनन्तरमेव स्वाभाविकगुणाष्टकाविर्भाव–सकलगुणविग्रहविभूतिविशिष्टब्रह्मानुभव — तत्परीवाहरूपविविधकैङ्कर्यादिरूपा साक्षान्मुक्तिः। पञ्चाग्निविद्यानिष्ठनां तु, ईदृशमुक्तिप्राप्तेः प्राक् केवलस्वात्मानुभवरूपकैवल्यप्राप्तिः कञ्चित्कालमवान्तरफलम्। इदमेव तेषां फलविषये वैषम्यम्। परमफले तु न किञ्चिदपि। सर्वेषामप्येषां पुनस्संसारसम्बन्धगन्धोपि न भवति। एवं स्वाभाविकसकलकल्याणगुणविशिष्टमेव परं ब्रह्म; तद्विषयकमेवोपासनं मुख्यमुक्तिसाधनम् ; सा च मुक्तिः परब्रह्मासाधारणधर्मवर्जं तेन परमसाम्यापत्तिरूपा । अयमेव सोपबृंहण सर्ववेदान्तसिद्धान्तः। तास्वन्यतमाऽक्षिविद्याऽत्र प्रस्तूयते 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादिना । तथाचात्रोक्तः पुरुषस्साक्षात्परं ब्रह्मेति, फलञ्च साक्षान्मुक्तिरूपमिति चानिच्छताप्यङ्गीकार्यम् ।

एवं स्थितेपि यदुक्तमत्र परैः — 'अत्र पुरुषपदं सगुणावरब्रह्मपरम्। अत्रोपात्तास्संयद्वामत्वादयो गुणा उपासनार्थाः, न परमार्थभूताः। 'स एनान्ब्रह्म गमयती' त्यत्र ब्रह्मपदमपि सत्यलोकस्थचतुर्मुखपरमेव । एवं बृहदारण्यकेऽष्टमा-

ध्यायेपि 'य एवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति' इत्यत्र सत्यपदमपि हिरण्यगर्भपरमेव। एवमेवाभ्युपगन्तव्यमिदं सर्वम्, अन्यथा गतिश्रवणानुपपत्तेः। तद्धि प्राप्यं परिच्छिन्नमवगमयति। इतः पूर्वमप्राप्तपरिच्छिन्नदेशविशेषवर्तिवस्तुप्राप्त्यर्थयैव गत्या भवितव्यम्। नह्यपरिच्छिन्नस्य सर्वगतस्य ततएव नित्यप्राप्तस्य प्राप्तिरिदानीमपूर्वा काचित्, यदर्था गतिस्स्यात्। एवं प्राप्यस्य परिच्छिन्नत्वे निश्चिते, तत्क्रतुन्यायादुपास्यमप्यवरमेवाभ्युपगन्तव्यम् गुणाश्चापरमार्था इति। ननु कथं तर्हि 'नावर्तन्त' इत्यपुनरावृत्तिश्रवणमिति चेन्न – अत्र सर्वात्मना पुनरावृत्तेरनिषेधात्। इममिति ह्यावर्तो विशेष्यते। तेन कल्पान्तरे आवृत्तिरस्तीति गम्यते। 'तेषामिह न पुनरावृत्ति' रिति श्रुत्यन्तरञ्च। पुनरावृत्तेरत्यन्तनिषेधे विवक्षिते, इहपदवैयर्थ्यं प्रसजेदिति। नात्र सद्विद्यादाविव परस्य प्रत्यगात्मतयोपासनं, ब्रह्मभावो वा फलं श्रूयते। अत उक्तएवार्थोऽस्य वाक्यस्याभ्युपगन्तव्य' इति —

**तदिदं न सङ्गच्छते। नपुंसकलिङ्गब्रह्मपदस्य, सत्यपदस्य च** 'सत्यं ज्ञानमनन्तं ब्रह्म' **त्याद्यनुसारेण परस्मिन्ब्रह्मणि मुख्यत्वात्, मुख्यार्थग्रहणेऽनुपपत्तिलेशाभावाच्च तयोरस्वरसार्थकत्वकल्पनमुपेक्ष्यम्। एवं गुणानां पारमार्थ्ये दोषलेशाभावात्तदपारमार्थ्येऽनन्यथासिद्धप्रमाणलेशाभावाच्च तदपारमार्थ्यवर्णनमप्यविश्वसनीयम्। निर्विशेषं ब्रह्म न केनापि सिध्यतीत्युत्तरत्र वक्ष्यते। इत्थञ्च तेनैव तत्क्रतुन्यायेनोपास्यसमर्पकं पुरुषपदं सविशेषमुख्यब्रह्मपरमेवाश्रयणीयम्। बृहदारण्यक उपास्यसमर्पकसत्यपदानुरोधाच्च। तत्र सत्यपदवाच्यस्योपासनमुक्त्वा तस्य फलतयाऽर्चिरादिगत्यादिकमुक्तम्। अत्र पुरुषपदवाच्यस्योपासनमुक्त्वा तदुच्यते। सत्यपदश्रुतिश्च निरुपाधिकसत्ताश्रयवाचिनी, पतिव्रतेव परपुरुषं, न परब्रह्मणोन्यमर्थं निरीक्षितुमपीहते। अत्र श्रूयमाणं पुरुषपदमपि निरुपपदं** 'पुरुषान्न परं किञ्चित्' 'पुरुष एवेदं सर्वं' **मित्यादौ पुरुषपदमिव परमात्मानमेव बोधयितुमुत्सहते। इत्थञ्च तयोरैकार्थ्यं तत्रापि सविशेषमुख्यब्रह्मपरत्वञ्च न्यायविद्भिरुररीकार्यमेव। यत्तु**

तत्रोक्तं 'ब्रह्मलोकान् गमयतीति गन्तव्यस्य बहुवचनान्तलोकशब्देन प्रतिपादनाद्धिरण्यगर्भलोका एव प्राप्या इति प्रतीतेः बृहदारण्यकवाक्यस्य हिरण्यगर्भोपासन-तत्प्राप्तिपरत्वमास्थेय' मिति। तन्न। उपक्रमगतसत्यशब्देन उपासनस्य परब्रह्मविषयत्वे निश्चिते तत्क्रतुन्यायेन प्राप्यस्यापि तद्रूपत्वावगमेन, निषादस्थपत्यधिकरणन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयसमासस्यैवाङ्गीकार्यत्वेन अर्थैकत्वनिश्चये पाशाधिकरणनीत्या बहुत्वाविवक्षाया एव युक्ततमत्वात्। कश्च सत्यलोकवासिनो हिरण्यगर्भस्यापि बहवो लोकाः? प्रकृतिमण्डल एव बहुलोकसंभवे अपरिच्छिन्नायां नित्यविभूतावनन्तलोकसद्भावस्यासंभावितत्वाभावात्, परमात्मनोऽप्यप्राकृतासाधारणानेकलोकसद्भावस्यानन्यथासिद्धबहुप्रमाणप्रतिपन्नतया च स्वरसार्थग्रहणेऽनुपपत्तिगन्धाभावाच्च। यदुक्तं 'तथासति गतिश्रुतिर्नोपपद्यत' इति – तन्न, गतेः ब्रह्मसंयोगमात्रार्थत्वानभ्युपगमात्। विशिष्टदेशप्राप्त्यादिः फलमिति ह्युक्तम्। प्रमाणञ्चात्र पर्यङ्कविद्याश्रुत्यादिकम्। न च तदवरविद्याफलपरमिति वाच्यं – निर्गुणविद्याफलस्य भवदभिमतस्य कस्यचिद्गगनारविन्दगन्धसगन्धतयैव तस्य परविद्याफलत्वानपायात्। तस्य तत्त्वञ्चोत्तरत्र व्यक्तीभविष्यति। नित्यस्यापि कालविशेष एव विलक्षणप्राप्त्यङ्गीकारवत् सर्वगतस्यापि देशविशेष एव प्रमाणानुसारेण प्राप्त्यङ्गीकारे बाधकाभावात्। यत्तूक्तम् 'इममिति विशेषणात् इहेत्युक्त्या च कल्पान्तरे आवृत्तिर्द्योत्यत' इति तदपि न, 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते; न च पुनरावर्तते', 'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः॥ आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥', 'सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः। किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः॥', 'गत्वागत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः। अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः॥', 'प्राप्यते परमं धाम यतो नावर्तते यतिः', 'यदा स केवली-

मूतष्षड्विंशमनुपश्यति । तदा स सर्वसिद्धत्वात्पुनर्जन्म न विन्दति ' ॥ ' अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः । यत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ' इत्यादिश्रुतिस्मृतिशतैर्मुक्तिं प्राप्तानां कदापि पुनस्संसाराप्राप्तेस्स्फुटतरं प्रतिपादनात् । ' संसिद्धिं परमां गताः ' मामुपेत्य तु कौन्तेय ' त्यत्र भगवन्तं प्राप्तानां, पूर्वोक्तचतुर्मुखादिवत् भगवतः परिमितायुष्ट्वानित्यत्वाभावेन प्राप्यविनाशप्रसङ्गाभावान्न पुनरावृत्तिशङ्कावकाश इत्यंशस्य प्रकरणस्वारस्यसिद्धत्वेन भगवतः श्रीवैकुण्ठनाम्नस्तल्लोकस्य चाविनाशे सति किमिति निरञ्जना मुक्ताः पुनरावर्तेरन् । ' मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चने ' ति च भगवदभिप्रायपद्धतिः । अपिच मुक्तेरपि नाशाङ्गीकारे 'स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृति' रिति न्यायेन मुक्तेः दुःखसम्भिन्नत्वप्रसङ्गेन मुक्तित्वमेव न स्यात् ! ईदृशमुक्तयेऽनेकजन्मसु उपासनानुष्ठानस्यात्यन्तायुक्तता च । किञ्च ' इमम् इहे ' ति विशेषणात्कल्पान्तरे आवृत्त्यङ्गीकारे तयोर्व्यक्तिविशेषपरत्वावश्यम्भावेन श्रुतेरनित्यार्थत्वप्रसङ्गो दुष्परिहरः । इत्थञ्च ' इममिहे ' ति शब्दौ स्वानुभवसन्निहितविषयौ सन्तौ आवर्तादिशब्दितसंसारस्य दुःखबहुलत्वादिनाऽतिदुःखवहत्वं द्योतयत इत्येवाभ्युपगन्तव्यम् । यथा ' इमानि भूतानि ' त्यादौ इदमादिपदानां भूतादिगतवैचित्र्यादिद्योतकत्वम् । न हि तत्र कल्पान्तरगतभूतकारणब्रह्मान्तरकल्पना प्रकृतब्रह्मणस्संप्रतिदृश्यमानभूतमात्रकारणताचेष्यते । अतोऽस्य यथोक्त एवार्थस्सर्वप्रमाणानुगुणो बाधलेशविधुरश्चेति ध्येयम् ॥ ११ ॥

अस्यामेव (६) ' श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि, उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति अमतं मतम् , अविज्ञातं विज्ञातम्', ' कथन्नु भगवस्स आदेशो भवति ', ' यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्य एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् ', सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ; तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसत-

स्सज्जायते । कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतस्सज्जायेतेति । सत्त्वेवं सोम्येदमग्र आसीदेकमेवाद्वितीय' मिति श्रूयते । अस्यायं निर्गलितार्थः– हे सोम्य प्रौढमतिरात्मानं यथावत् साङ्गवेदाध्यायिनं मन्यमानस्तृणीकृतजगत्त्रयः परिपूर्ण इवासि इतीदं यत् यस्माद्धेतोः, स कः? तमादेशं आदेष्टारं सर्वनियन्तारं सर्वात्मानं जगदुपादानं किं पृष्टवानसि, येनाऽऽदेष्ट्रा श्रुतेनाश्रुतमपि सर्वं श्रुतं भवति, येन मतेनामतमपि मतं भवति, येन विज्ञातेनाविज्ञातमपि विज्ञातं भवतीति पुत्रं श्वेतकेतुमारुणिः पितोवाच । हे भगवन् ईदृशादेशः कथं भवेदित्यन्यज्ञानेनान्यज्ञानासम्भवं मन्वानः पुत्रश्चोदयामास । यथा उपादानभूते मृत्पिण्डे ज्ञाते तदुपादेयघटशरावादिकं ज्ञातं भवति, यथा सुवर्णपिण्डविशेषे उपादानभूते ज्ञाते तदुपादेयभूतं कटकमकुटादि ज्ञातं भवति, तद्वदिति पिता प्रत्युवाच । पुनरपि नैयायिकरीत्या पूर्वमसदेव घटादिकं मृत्पिण्डादुत्पद्यते । ततश्चोपादानोपादेययोर्भेदान्न मृत्पिण्डज्ञानेन सर्वमृण्मयज्ञानं सम्भवतीति मन्वानं पुत्रं प्रति पिताऽऽह–घटशरावादि नामधेयश्च तेनैव मृद्द्रव्येण वाक्पूर्वकहानोपादानादिव्यवहारसिद्ध्यर्थं प्राप्येते । ततश्च मृण्मयं घटादिकं मृत्तिकारूपतयैव प्रमाणप्रतिपन्नम् ; न तु तद्भिन्नत्वेन । एवमन्यत्रापि । एवं जगदपि सत उत्पन्नं सद्रूपमेवेति तद्ज्ञानेन तद्ज्ञानमुपपन्नमिति । इदं विभक्तनामरूपं बहुत्वावस्थं जगत् सृष्टेः प्राक्काले अविभक्तनामरूपतया एकत्वावस्थापपन्नमेव निमित्तान्तरशून्यं सदेवासीत् । 'इदं जगदग्रे असदेवासीत्, न तु सदासीत् । एतत्प्रागभावातिरेकेणावस्था वा काचित्, अवस्थाश्रयो वा कश्चिन्नासीत् । तस्मादसत एव द्रव्यस्य सत्त्वरूपोत्पत्तिसंभव' इति तद्विषये असत्कार्यवादिनो वदन्ति । सोम्य 'असतस्सज्जायत' इत्येतत्कथं सम्भवेत् प्रत्यक्षादिविरोधात् । अतः इदं जगत् पूर्वमपि सदेवासीदेकमेवाद्वितीयमिति प्रतिज्ञातस्य एकविज्ञानेन सर्वविज्ञानस्य समर्थनाय जगतो ब्रह्मैककारणत्वप्रतिपादनप्रवृत्तः पिता लोके अपराह्नप्रसारितघटशरावादेः मृत्पि-

ण्डैकोपादानत्वज्ञापनाय 'पूर्वाह्णे घटशरावादिकमिदं सर्वं मृत्पिण्ड एवासी' दिति व्यवहारप्रवृत्त इव, पुत्रं प्रति प्रतिपादयमास ।

अस्मिन्प्रकरणे हि मृत्पिण्डघटाद्यनेकदृष्टान्तोपन्यासपूर्वकं ब्रह्मज्ञानेन जगद्विज्ञानोपपादनाद्ब्रह्मजगतोरुभयोरपि सत्यत्वमेकद्रव्यत्वं, सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाभेदमात्रम्, अवस्थामात्रभेदेपि अवस्थाश्रयस्यैकत्वात्स्थूलावस्थाविशिष्टत्वेन जगतोऽज्ञानेपि सूक्ष्मावस्थाश्रयज्ञानेनैवास्यापि ज्ञातत्वमितीमे अंशास्सुस्पष्टं प्रतीयन्ते । अत्र ब्रह्मविज्ञानेन जगद्विज्ञानकथनं, ब्रह्मणि जगतोऽध्यस्तत्वेन मिथ्यात्वमिति पक्षे सर्वात्मना न घटते इतीममंशं सर्वोपि सुखं जानीयात् : न हि शुक्तिज्ञानेन लोके रजतज्ञानं कस्यचिदुत्पद्यमानमुपलभ्यते । अपि तु तेन तन्निवृत्तिरेव । यदि शुक्तिरजतयोरैक्यं तदा 'इयं शुक्ति' रिति ज्ञाने रजतमपि विषय इति तद्ज्ञानोक्तिरुपपद्येत । नैवं तत्र स्थितिः । सत्यमिथ्यार्थैक्यायोगात् । अत्र चैकविज्ञानं तत्त्वयाथात्म्यज्ञानमिष्टम् । अत इदमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमेकमेव परमतारण्यच्छेदे परमः कुठारः । एवमपि यदत्र बहु विक्रान्तं परैः, तत्र सारांशमनूद्य प्रति विधीयते । 'मृत्पिण्डे कारणे ज्ञाते कार्यमन्यत्कथं विज्ञातं स्यादिति न शङ्क्यम् ; कारणेनानन्यत्वात्कार्यस्य । यदि कारणादन्यत्कार्यं स्यात्, तदेयं शङ्का स्यात् । कथं तर्हि 'इदं कारणम्, अस्यायं विकार' इति लोकव्यवहार इति चेत्—तत्र 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य' मिति श्रुतिरेव समाधानमाह । अस्यायमर्थः — वाचेति षष्ठ्यर्थे तृतीया । आरम्भणं—आलम्बनम् । घटशरावादिरूपो विकारः वाग्विषयमात्रं न वस्तुतो विकारो नाम कश्चिदस्ति । किन्तु नामैव केवलम् । मृत्तिकेत्येव मृत्तिकैव सत्यं वस्त्वस्तीति । एवं 'सदेव सोम्येद' मित्यत्र एकमित्यनेन सजातीयस्वगतभेदराहित्यमुच्यते । 'अद्वितीय' मित्यनेन विजातीयभेदराहित्यम् । इत्थञ्च सजातीयविजातीयस्वगतभेदरहितं सन्मात्रं कारणम् । तस्मादन्यस्य जगतः परमार्थतोऽभावेन कारणज्ञानेन कार्यज्ञानमुपपन्नम् । यथा मृत्पिण्डज्ञानेन घटशरावादिज्ञानमित्येवैतत्प्रकरणार्थो वर्णनीयः । ब्रह्मव्यतिरिक्त-

सर्वमिथ्यात्वग्राहकबहुप्रमाणानुरोधा' दित्यादि तदुक्तम् । तत्रोच्यते—अनन्यथासिद्धस्य प्रपञ्चमिथ्यात्वग्राहकस्य प्रमाणस्याद्यापि लेशतोप्यनुपलम्भेनोक्तवाक्यस्योक्तार्थपरत्वं न संभवति । 'नेह नानास्ती' त्यादिनिषेधवाक्यानां सर्वप्रमाणानुगुणा युक्तियुक्ता च गतिरुत्तरत्र वक्ष्यते । किञ्च सद्विद्याप्रकरणमुपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गोपेतं सर्वात्मना निर्विशेषब्रह्मपरमिति तत्रतत्र युष्माभिरुद्धुष्यते । अस्य निर्विशेषपरत्वं सिद्धवत्कृत्यैतदनुरोधेन सविशेषपरतया स्वरसतः प्रतीयमानानि वाक्यान्तराणि निर्विशेषपरतया नीयन्ते च । अतोत्रार्थवर्णनाय प्रमाणान्तरगवेषणमयुक्तम् । अस्य तु प्रकरणस्य प्रतिपाद्यरहस्यं किञ्चित्प्रकाशयामः । — अत्रोपक्रमे 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती' त्यादिना सविशेषमेव ब्रह्म प्रतिपाद्यते : अङ्पूर्वकाद्दिशेर्निष्पन्न आदेशशब्दो हि शासितृत्वविशिष्टपरः । शासनञ्च जगन्नियमनरूपो व्यापारविशेष इति शासितुश्शासनीयजगद्वैशिष्ट्यमावेदयति । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानञ्च तत्तदवस्थाविशेषविशिष्टं कारणमेव कार्यमित्यारम्भणाधिकरणोक्तरीत्या कार्यकारणयोरनन्यत्वं ज्ञापयत् ब्रह्मण उपादानत्वपरमित्यभ्युपगन्तव्यम् । अत्र ब्रह्मणो विवर्तोपादानत्वन्तु न शक्यशङ्कम् । 'यथा सोम्य एकेन मृत्पिण्डेने' त्यादिदृष्टान्तेषु परिणाम्युपादानस्यैव प्रतिपादनात् । अतस्सप्रपञ्चमिदमुपादानभूतं निमित्तकारणञ्च ब्रह्मेत्येवात्रावगम्यते । 'सदेव सोम्येदमग्र आसी' दित्यत्रापि इदंशब्देन जगदुपादानात्तस्य 'सदेवे' त्यनेन सृष्टेः प्रागपि सताऽभेदात्सत्यत्वमवधार्यते । अग्र इति तस्यां दशायां कालस्य सत्त्वं प्रतीयते ; 'आसी' दिति, धात्वर्थसत्ताश्रयत्वञ्च ब्रह्मणः । तदनन्तरञ्च 'तदैक्षते' ति वाक्येन तत्पदवाच्यस्य ब्रह्मणस्सृष्ट्यनुकूलज्ञानसङ्कल्पकृत्याश्रयत्वं प्रतिपाद्यते । एवमुपक्रमस्तावदनेकविशेषविशिष्टब्रह्मपर एव प्रतीयते । मध्ये च 'सन्मूलास्सोम्येमाः प्रजास्सदायतनास्सत्प्रतिष्ठा' इति प्रजाशब्दोदिताचिद्विशिष्टजीववर्गस्य सच्छब्दोदितब्रह्मणश्च मूलमूलिभावा-

धाराधेयभावलयस्थानतत्कर्तृभावानां प्रतिपादनात्परस्परमत्यन्तभेद एव प्रतीयते । उपसंहारे च 'ऐतदात्म्यमिदं सर्वं' मिति जगद्ब्रह्मणोश्शरीरात्मभावेन भेद एव प्रतिपादितः । 'तत्त्वमसि श्वेतकेतो' इति सम्बोध्यसम्बोधकभावेन श्वेतकेतूद्दालकयोर्भेदप्रतिपादनाज्जीवनानात्वमपि गम्यते । अत्रैव तदिति तच्छब्देन पूर्वोक्तसकलाकारविशिष्टं सद्रूपं ब्रह्मानूद्य तस्य अभिमुखचेतनविशेषाभेदविधानादुद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्भेदावश्यम्भावेन तत्पदार्थत्वम्पदार्थविशेषणयोः परस्परभेदस्सिद्ध इति । एवञ्चात्र प्रकरणे स्वनियन्तृत्वसम्बन्धेन ब्रह्मणो जगद्विशिष्टत्वं, जगद्ब्रह्मणोरुभयोरपि सत्यत्वं, प्रपञ्चं प्रति ब्रह्मणः परिणाम्युपादानत्वं, ब्रह्मणो ज्ञानशक्त्याद्यनेकविशेषवत्त्वं, जीवपरभेदः जीवनानात्वं, प्रपञ्चब्रह्मणोश्शरीरात्मभाव इत्येते विशेषाः केनापि प्रकारेणापलपितुमशक्याः प्रतीयन्त इत्यत्र विद्वांस एव विशेषतः प्रमाणम् । एवं स्थिते कथमिदं प्रकरणं निर्विशेषपरमङ्गीक्रियतामिति ।

यत्त्वत्र केनचित्प्रकरणस्यास्य निर्विशेषपरत्वप्रत्याशापरवशहृदयेनोक्तम् , 'अत्र तमादेशमित्यत्रादेशशब्दः कर्मणि घञन्तस्सन्नुपदेशगम्यवाची; न शासितृवाची । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि विवर्ताभिप्रायम् । मृदादिदृष्टान्ता अप्युपादानस्वरूपे तदात्मना उपादेयं ज्ञातं भवतीत्येवमभिप्रायाः, न तु परिणामाभिप्रायाः । 'सदेव सोम्येदमग्र आसी' दित्यत्र सत्पदं सत्तामात्रब्रह्मपरं; न सत्ताश्रयपरम् । 'एकमेवाद्वितीय' मित्येतत् तद्विशेषणम् । इत्थञ्च 'अथात आदेशो नेति नेती' त्यादिश्रुतिसिद्धं यदेकमेवाद्वितीयं सकलद्वैतशून्यं सत्तामात्रमात्मरूपं, तद्व्यतिरेकेण सृष्टेः प्रागिदं नामरूपात्मकं किमपि नासीदित्येतदर्थः । अत्र 'नेतिनेती' ति श्रुतिसिद्धार्थकथनपूर्वकं प्रळयनिरूपणं प्रळयकालस्य तदाधेयस्य सूक्ष्मप्रपञ्चस्य च वस्तुतस्सत्तां निराकर्तुम् । ततश्चोपक्रमोऽयं निर्विशेषपर एवे' ति । तदाशामात्रम् । आदेशशब्दस्योपदेशकर्मपरत्वाङ्गीकारेऽप्युपदेष्टुराचार्यस्योपदेशक्रियायास्तज्जन्यज्ञानस्य, तदाश्रयशिष्यस्य, ब्रह्मणस्तादृशज्ञानविषयत्वस्य च प्रतीत्योपक्रमस्य बहुविधभेदगर्भत्व-

स्यैव सिद्धेः। कुसृतिकल्पनं परमवशिष्टम्। एषां मिथ्यात्वान्न दोष इति चेत्, तर्हि शासितृत्वपक्षेण किमपराद्धम्। अकर्तरीत्युक्त्या रूपासिद्धिरिति चेत्, संज्ञायामित्युक्त्या तवापि तुल्या सा। तदुपायोऽस्माभिरुक्त इति चेत्, एतदुपायोऽप्यस्मदाचार्यैर्विस्तरेणोक्त एव। सर्वविज्ञानप्रतिज्ञानस्य 'वाचारम्भण' मित्यादिवाक्यशेषवशाद्विवर्ताभिप्रायत्ववर्णनं सर्वात्मना न संभवतीति सम्यगुपपादितम्। 'उपादानस्वरूपे ज्ञाते तदात्मनोपादेयं ज्ञातं भवती' तीयमुक्तिरुपादेयमिथ्यात्वे कथं भवेत्। असत उपादेयस्य कथमुपादानात्मना ज्ञातत्वसंभवः?। उपादानात्मना ज्ञातत्वञ्चोपादानविशेष्यकज्ञानविशेष्यत्वम्। तच्च वस्तुतोऽविद्यमानस्य कथं संभवति। न हि शुक्तिरजतस्थले शुक्तिमात्रज्ञानदशायां तद्ज्ञानविशेष्यत्वं रजतस्य दृष्टम्। यत्तु 'सदेवे' त्यादेरर्थवर्णनं, तदप्ययुक्तम्। सत्ताश्रयशक्तस्य सत्पदस्य सत्तामात्रपरत्वे लक्षणा। अस्तेः कर्तरि हि शता, न भावे, अनुशासनाभावात्। न हि 'घटस्य सदि' ति प्रयोगः। अद्वितीयपदस्यापि कार्यस्वाभाव्याद्बुद्धिस्थनिमित्तान्तरनिषेधमुखेन सत एव निमित्तत्वप्रतिपादनपरत्वमेष्टव्यम्। द्वितीयसामान्यनिषेधे च 'अग्र आसी' दिति पदद्वयप्रतिपन्नकालविशेष–क्रिया–तदाश्रयत्वानामनुपपत्तिः। इदं प्राङ्नासीदिति वदता च त्वया श्रूयमाणेदम्पदस्य कुत्रान्वय इष्यते। न तावन्नासीदित्यध्याहारेण वाक्यात्पृथक्कारो युक्तः। नाप्येवकारो नञर्थः। नापि प्रकृतवाक्येऽन्वयः, असत्यप्रपञ्चे सदभेदायोगात्। नचाग्र आसीदिति पदघटितप्रकृतवाक्ये बाधार्थसामानाधिकरण्यसंभवः। तदत्र निर्विशेषप्रतीतेस्सर्वात्मनाऽसम्भवेन 'नेति नेती' त्यादिश्रुत्याग्राणस्याप्यसिद्ध्या तादृशश्रुतिसिद्धार्थकथनं सिद्धवत्कृत्य यत् प्रयोजनवर्णनं तन्निरस्तं वेदितव्यम्। इत्थञ्च उपक्रमोऽयं सविशेषपर एवेति सिद्धम्। आदेशशब्दविषये कर्मप्रत्ययपक्षे ब्रह्मण उपदेशजन्यज्ञानविषयत्वाभ्युपगमेन तन्मते घटादिवज्जडत्वापत्तिरधिकं फलम्।

यदप्युक्तं, 'मध्येपि अनेन जीवेनात्मनेति जीवब्रह्माभेदः प्रतीयत' इति । तदपि न ; तत्र जीवपदस्य जीवशरीरकपरत्वात् । 'तदनुप्रविश्य' ' सच्च त्यच्चाभवदि ' त्यादिवचनान्तरैकार्थ्यात् । 'य आत्मनि तिष्ठन्यस्यात्मा शरीर' मित्यादिना जीवब्रह्मणोरत्यन्तभेदप्रतीत्या तयोरैक्यायोगात् । शरीरवाचकस्य शरीरिपर्यन्ततताया लोकवेदसिद्धत्वाच्च । ततश्च ' सिंहेन भूत्वा बहवो मयात्ताः ' इत्यादिवदयं निर्देश इत्येव प्रतिपत्तव्यम् । जीवपदस्य विशिष्टपरत्वास्वीकारे आत्मपदस्य स्वपरत्वे प्रमाणाभावात्करणे तृतीयौचित्याच्चानेन जीवेनात्मनेति निर्देशविशेषः स्वातिरिक्तजीवात्मसद्भावमेव स्थापयेत् । अन्यथा वैयर्थ्यात् । अतो मध्यभागोपि सविशेषपर एवेति । ' एवमुपसंहारेपि निर्विशेषत्वमेवोपलभ्यते – ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इती ' ति यदुक्तम् तदपि त्याज्यम् । इदं सर्वमेतदात्मकमिति इदन्त्व–चेतनाचेतनात्मकप्रपञ्चरूपत्व ब्रह्मत्वादि विविधविशेषप्रतीतेः । ' एष आत्मा यस्येति बहुव्रीहिः । ततो भावप्रत्ययः । स च प्रकृत्यर्थप्रकारबोधकः । स च प्रकृते आत्मैव । ततश्च ' ऐतदात्म्यमिदं सर्व ' मित्यस्य इदं सर्वमेष आत्मेत्यर्थः फलति । ' इदं सर्वं यदयमात्मे ' तिवत् इदं सर्वमेष आत्मेत्येव लाघवाद्वक्तव्ये बहुव्रीहिभावप्रत्ययादरणमन्यत्र समानाधिकरणनिर्देशे आत्मात्मीयभावनिबन्धनत्वशङ्कानिरासार्थम् । तच्च सामानाधिकरण्यं मृद्घट इतिवन्न परिणामाभिप्रायं, किन्तु रजतं शुक्तिरितिवदारोपितबाधाभिप्रायमिति ज्ञापनाय ' तत्सत्य ' मिति वाक्यम् । आत्मैव सत्य इति तदर्थः । अनात्मा अनृत इति फलितम् । ततश्च जगद्ब्रह्मणोस्सामानाधिकरण्यं जगद्बाधार्थमिति प्रकरणाभिप्राय ' इति यदुपसंहारस्य निर्विशेषपरत्वसम्पादनं – तदपि हेयम् । इदं सर्वमेष आत्मा इत्यस्य 'ऐतदात्म्यमिदं सर्व' मित्यस्मात्सर्वात्मना लाभासम्भवात् । न हि लोके एषा रज्जुस्सर्पः, एषा शुक्तीरजतमित्याद्यर्थबोधनाभिप्रायेण 'एतद्रज्जुकत्वं सर्पः, एतच्छुक्तिकत्वं रजत ' मित्यादिप्रयोग उपलभ्यते उपपद्यते वा । ' अनेकमन्यपदार्थे ' इति हि स्मृतिः ।

एष आत्मा अस्येति हि भवतापि विगृहीतम् ; नत्वेष आत्मा अयमिति । विग्रहदशायां प्रतीतो जगद्ब्रह्मभेदस्समासदशायां क्व गतः । भावप्रत्ययश्च न तदपहरणशक्तः । अपित्वन्यपदार्थतया विवक्षिते जगति आत्मसंबन्धसम्पादनसमर्थः । 'कृत्तद्धितसमासेभ्यस्सम्बन्धाभिधानं भावप्रत्ययेने 'ति हि शब्दशास्त्रविदः । इत्थञ्च सामानाधिकरण्यं दुर्वचमेव । ऐतदात्म्यमस्य सर्वस्येति हि तदा भाव्यम् । न हि पीताम्बरत्वं हरिरित्यादि दृष्टम् ; ऐतदात्म्यमस्य सर्वस्येति निर्देष्टुमपि न भवन्मते शक्यम् ; अन्यपदार्थस्याविद्यमानत्वात् । विद्यमानत्वेपि भेदे सामानाधिकरण्यायोगात्, अभेदे प्रथमार्थे बहुव्रीह्ययोगात् । अत्रात्मशब्दस्य स्थाण्वात्मकश्चोर इतिवत् त्वन्मते स्वरूपपरत्वमप्यसंभवि, तदापि भावार्थकप्रत्यययायोगात् ; वक्ष्यमाणदोषाच्च । 'सामानाधिकरण्यं; तच्चान्यतरबाधगर्भ 'मित्येतदसङ्गतं वचः । चोरस्स्थाणुरित्यत्र चोरपदं चोरत्वप्रकारकभ्रमविशेष्ये लाक्षणिकम् । सामानाधिकरण्यञ्च निर्बाधम् । भ्रमविशेष्यत्वस्थाणुत्वयोरेकत्राक्षतेः । इदं सर्वमात्मेत्यादावीदृशरीत्याश्रयणन्तु न शक्यशङ्कम् ; लक्षणापत्तेः, चोरस्येव प्रपञ्चस्य निषेधकानन्यथासिद्धप्रमाणलेशानुपलम्भाच्च । इदञ्च द्वात्रिंशे अधिकारे स्पष्टीभविष्यति । एतेन 'तत्सत्य' मिति वाक्यप्रयोजनवर्णनमपि तदभिमतमसंभवि । तस्मादुपक्रमानुरोधाच्चोपसंहारोपि सविशेषपर एव । एवञ्चोपक्रममध्यभागोपसंहाराणां कस्यचिन्निर्विशेषपरत्ववर्णनमाशामात्रमेवेति स्थितम् ॥

'कारणेनानन्यत्वात्कार्यस्य कारणज्ञानेन ज्ञातते' ति यदुक्तं – तत् मिथ्यार्थस्य सत्यार्थानन्यत्वासम्भवादिना पूर्वमेव निरस्तम् । यदपि 'वाचारम्भण 'मित्यादेरर्थवर्णनं, तदप्यसङ्गतम् । घटपटादिविकारजाते वागालम्बनत्वमात्रोक्त्या तस्य मिथ्यात्वसम्पादनस्याशक्यत्वात् । प्रत्युत वाच्यसत्त्व एव शब्दस्य वाचकत्वसम्भवेन वाग्विषयत्वेन विकारजातस्य सत्यत्वस्यैव सिद्धिप्रसङ्गात् । रज्जुसर्पस्थले, अत्र सर्प इति

नाममात्रं न वस्तुतस्सर्पोऽस्तीत्येतत्तूपपन्नतरम् । वल्मीकादौ सत्यार्थकस्यैव सर्पशब्दस्य रज्ज्वादौ प्रयोग एव वाङ्मात्रमित्युच्यत इति । तद्वदत्र घटपटादिनामधेयस्य क्वचिदन्यत्र सत्यार्थकस्य तदभावस्थले प्रयोगो यदि स्यात्, तदा घटपटादिवाङ्मात्रं, नार्थोऽस्तीति वक्तुं शक्येत । प्रकृते तु न तथा; क्वचिदपि घटपटादिनाम्नां सत्यार्थककत्वानभ्युपगमादिति । एतावता भवन्मते घटपटादिनामधेयानां कुत्रापि सत्यार्थकत्वाभावेन नाममात्रपरिशेषणमसङ्गतामित्युक्तं भवति । अपिचोपादानोपादेययोरैक्योपलम्भेनोपादानसत्यत्वे उपादेयमिथ्यात्वं श्रुतिरपि न प्रतिपादयितुं शक्नोति । उपलभ्यते हि लोकवेदयोरुपादानोपादेयाभेदोऽबाधितः, 'मृदयं घटः' 'सदेवेद'मिति । किञ्चैवं नामधेयमित्यस्य, नाममात्रमित्यर्थकत्वे 'वाचारम्भण' मित्यस्मादनतिरिक्तार्थकतया पुनरुक्तिरपि दुर्वारा । अपिच मृत्तिकासत्यत्वमात्रविवक्षायां 'इति' शब्दवैयर्थ्यम् । 'मृत्तिकेव सत्य' मित्येतावत एव पर्याप्तत्वात् । किञ्च तत्वज्ञानात्पूर्वं लोकव्यवहारेणाबाधितेन शुक्तिरजतादिव्यतिरिक्तं सर्वं कार्यकारणजातं सत्यतया मन्यमानं शिष्यं प्रत्युपदेशावसरे, घटशरावादीनां मिथ्यात्वं मृत्तिकामात्रस्य सत्यत्वञ्च शिष्यस्यापि सम्प्रतिपन्नमिति कृत्वा वाचारम्भणमित्याद्युपन्यासोऽसङ्गत एव स्यात् । अपिच 'वाचारम्भण' मित्यादिकं लोकसिद्धमेवानुवदति, नापूर्वं किञ्चिद्ज्ञापयतीति दृष्टान्तभूतमृत्तद्विकारविषयत्वात्सिद्धम् ।

अपिच श्रुत्युक्तं मृत्तिकासत्यत्वम् एवकारफलितं विकारमिथ्यात्वञ्च कीदृशम्? किं प्रातिभासिकसत्त्वं मृत्तिकायाः, उत व्यावहारिकसत्त्वं, अथ पारमार्थिकसत्त्वम्? एवं विकारमिथ्यात्वमपि किं ब्रह्मज्ञानबाध्यत्वरूपम्, उत तदतिरिक्ततत्तदधिष्ठानज्ञानबाध्यत्वरूपम्? तत्र शुक्तिकाज्ञानेन रजतबाधवद्यत्किञ्चिदधिष्ठानज्ञानेन मृत्तिकाप्रतीतिकाल एव कुत्रापि तद्बाधादर्शनात्प्रातिभासिकत्वं न वक्तुं शक्यम् । व्यावहारिकसत्त्वन्तु विकारस्याप्यक्षतमिति 'मृत्तिकैवे' त्येवकारासाङ्गत्यम् । तृती-

यन्तु अद्वैतहानिभिया न युष्माभिरप्यङ्गीक्रियते । विकारजातस्य मिथ्यात्वमपि तत्तदधिष्ठानज्ञानबाध्यत्वरूपं न वक्तुं युक्तम् । तत्प्रतीतौ सत्यांबाधादर्शनादेव । तत्तद्विकारजातं प्रति ब्रह्मव्यतिरिक्तस्य कारणस्याधिष्ठानत्वाभ्युपगमे तुल्यन्यायात्कारणविषयेपि तथैवाभ्युपगन्तव्यतया 'प्रपञ्चस्य माया परिणाम्युपादानं, ब्रह्म विवर्तोपादान' मिति सिद्धान्तभङ्गप्रसङ्गः । मिथ्याभूतस्य मिथ्याभूतमुपादानमिति अविद्याकल्पनाऽयोगश्च, मृत्तिकावत् तस्यास्सत्यत्वावश्यकत्वात् । ब्रह्मज्ञानेन जगन्निवृत्त्यनुपपत्तिश्च । ब्रह्मज्ञानबाध्यत्वरूपन्तु कारणभूतमृत्तिकाया अप्यविशिष्टत्वाद्विकारमात्रमिथ्यात्वकथनानुपपत्तेर्न वक्तुं युक्तम् । अतस्सर्वात्मना तत्तत्कारणं सत्यं, तत्तत्कार्यन्तु मिथ्येत्यर्थपरत्वं 'वाचारम्भण' मित्यादेर्न सम्भवतीति तस्य पूर्वोक्त एवार्थ आश्रयणीय इति सिद्धम् ।

अपिचात्रैव (१२ ख.) 'न्यग्रोधफलमत आहरेति । इदं भगव इति । भिन्धीति । भिन्नं भगव इति । किमत्र पश्यसीति । अण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्धीति । न किञ्चन भगव इति । तं होवाच यं वै सोम्यैतमणिमानं न निभालयसे एतस्य वै किल सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति, श्रद्धत्स्व सोम्येति । स य एषोऽणिमैतदात्म्यमिदं सर्वं' मित्यादि श्रूयते । अणिम्नस्सच्छब्दितस्य रूपस्पर्शादिविहीनस्य विविधस्थावरजङ्गमपरिपूर्णानेकब्रह्माण्डकारणत्वं कथं सम्भवेदिति शङ्कमानाय प्राह — 'न्यग्रोधफल' मित्यादि । इदमुक्तिप्रत्युक्तिरूपम् । भगव इति पदघटितं सर्वं शिष्यस्य प्रतिवचनम् । धाना बीजम् । अणिमानं धानान्तर्गतसूक्ष्मांशम् । शिष्टं स्पष्टम् । अनेन हि सन्दर्भेण सूक्ष्मस्यैव सतः परिणामभूतमिदं स्थूलं जगदिति, धानान्तर्गतसूक्ष्मांशवत् कारणभूतचिदचिदन्तर्गतं सुसूक्ष्मं सद्ब्रह्मेति, वटधानावटवृक्षयोरिव सज्जगतोरुभयोरप्येकद्रव्यत्वं, तत एव कारणवत्कार्यसत्यत्वञ्च वेधोमुखैरपि दुर्निरोधं सिद्ध्यन्त्येव ।

एवमप्यनुपलभ्यमानस्य कथमुपलभ्यमानजगदन्तरात्मत्वमिति

शङ्काकळङ्कितचित्तं प्रत्याह – 'लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति' इति । अत्र उदके विलीनं लवणं न चक्षुषा गृह्यते, नापि त्वचा; तथापि न लवणस्य तदानीमसत्त्वम्, आचमने रसविशेषोपलम्भेन तदाश्रयद्रव्यापलापायोगात् । एवमेव जगदन्तर्यामितया वर्तमानमपि ब्रह्म न प्रत्यक्षादिप्रमाणेनोपलभ्यते, तदयोग्यत्वात् । शास्त्रचक्षुषा तूपलभ्यत एवेति दर्शितम् ।

अत्र च ब्रह्मणस्स्थूलजगन्मिश्रितत्वेन स्थितिरुक्तेति ब्रह्मण इव जगतोपि तन्मिश्रिततया स्थितस्य सत्यत्वं सुदृढमवसीयते । नह्यत्रोदकस्थानापन्नस्य जगतो लवणस्थानापन्ने ब्रह्मण्यध्यस्तत्वमाघ्रातुमपि शक्यम् । अध्यस्ताधिष्ठानयोः परस्परमिश्रणव्यवहाराभावेन लवणोदकदृष्टान्तोपरोधप्रसङ्गात् । 'अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत् । तथा विश्वमिदं देवो ह्यावृत्य परितिष्ठती' त्यादि प्रमाणान्तरमत्र हृदि कर्तव्यं परैः । अनन्तरश्च सर्वव्यापिब्रह्मावगत्युपायं सदृष्टान्तमाकाङ्क्षते प्राह – 'यथा सोम्य पुरुष' मित्यादि । अत्र पिहितनेत्रस्य देशविशेषाद्देशान्तरं केनचिद्बलान्नीतस्य पुरुषस्य दिङ्मोहादिदूषितस्याऽऽप्तोपदेशादिना सञ्जातसमीचीनज्ञानस्य स्वदेशप्राप्तिर्यथा, तथा यथावस्थितब्रह्मज्ञानाभावेन शोचतः कर्मपरवशस्य पुरुषस्य आचार्योपदेशेन सञ्जातब्रह्मज्ञानस्य देहवियोगानन्तरं यथावस्थितब्रह्मप्राप्तिर्भवतीति स्फुटमुक्तम् । अत्र दृष्टान्तविशेषबलादितः पूर्वमप्राप्तस्यैव ब्रह्मणो ज्ञानविशेषेण देशविशेषावच्छेदेन प्राप्तिरिति सिद्ध्या परप्रातिकूल्यमस्य प्रकरणस्य दुर्वारम् । नह्यत्र कण्ठस्थितकनकनयेन नित्यप्राप्तस्य प्राप्तिरप्राप्तत्वभ्रमनिवृत्तिरूपा श्रुतेति । अत्र 'तस्य तावदेव चिर' मित्याद्युक्त्या जीवन्मुक्तिर्गळहस्तितेत्येतत्पूर्वमेवोक्तम् । अत्र परैरपि न किञ्चिदन्यथा व्याख्यातम् । यत्त्वत्र 'सद्यस्त्वमसीत्यविद्यामोहपटाभिनहनान्मोक्षितो गान्धारपुरुषवच्च स्वं सदात्मानमुपसम्पद्य सुखी निर्वृतस्स्या' दिति विवृतम्, तत् प्रकरणविरोधप्रमाणान्तरविरोधादेरेता-

वता दर्शितत्वाद्दत्तोत्तरं वेदितव्यम् । तस्मात्सद्विद्याप्रकरणमिदं सर्वात्मना परमतप्रतिकूलमेवेति सिद्धम् ॥ १२ ॥

एवं सुबालोपनिषदपि परेषां प्रतिकूलैव । तथाहि– तत्र (१.ख) 'तदाहुः किं तदासीत् तस्मै सहोवाच नसन्नासन्नसदसदिति तस्मात्तमस्संजायते, तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी । तदण्डं समभव' दित्यादिना परमात्मनस्सकाशात्तमःपदवाच्यप्रधानादिक्रमेण सर्वजगदुत्पत्तिः प्रतिपाद्यते । द्वितीयखण्डे च 'ललाटात्क्रोधजो रुद्रोजायत' इत्येवं प्रथमखण्डानुक्तकतिपयसर्गप्रपञ्चनपूर्वकं 'पृथिव्यप्सु प्रलीयते....अक्षरं तमसि लीयते, तमः परेदेव एकीभवती' ति लयक्रम उच्यते । 'परस्तात् न सन्नासन्नसदस' दिति ततः श्रूयते । उपक्रमे 'न सदि' त्यादिनोक्तं वस्तु तमसः परस्तात् परमव्योम्नि दिव्यविग्रहादिविशिष्टं वर्तत इत्येतदर्थः । ततश्च खण्डाभ्यां कस्माच्चित्कार्यजगद्विलक्षणात् क्रमेण सकलसमष्टिव्यष्टितत्त्वोत्पत्तिः, स्वस्वकारणे क्रमेणोत्पत्तिप्रातिलोम्येन समष्टितत्त्वानां लयः, एवं सृष्टिलयविषयसर्वप्रपञ्चात्मकप्रकृतिमण्डलादूर्ध्वभूतेऽप्राकृतदेशविशेषे स्वासाधारणाकारविशिष्टत्वेन तस्यैव कारणवस्तुनोऽवस्थानञ्चोक्तानि भवन्ति ।

अत्र 'न सदि' त्यादिना कार्यावस्थचेतनविलक्षणं कार्यावस्थाचेतनविलक्षणमुभयात्मकजगद्विलक्षणं कारणवस्तु निर्दिश्यते । अस्तीति सत् । तेन नञर्थस्य नशब्दस्य नगनैकादिवत् सुप्सुपेति समासः । एवं नासदित्यादावपि । नशब्दश्चान्यपरस्सन्विलक्षणाभिधायी । सच्छब्दश्च स्वरूपविकाररहितमत एव सदा अस्तीति केवलं व्यवहारार्हं चेतनवर्गमाह; असच्छब्दो नानाविधस्वरूपविकारवदचेतनम् । अस्य वाक्यस्य सदादिनिषेधमात्रपरत्वे 'तस्मा' दित्यनन्तरवाक्ये कारणवस्तुपरामर्शो न सङ्गच्छेत । किञ्चिदपि नास्ति चेत् , 'तस्मा' दिति किं परामृश्येत । सदसदनिर्वचनीयाज्ञानपरत्वमस्यास्त्विति चेन्न– अत्र नसदादिशब्दैर्निर्दिष्टं वस्तु तैरेव शब्दैरुपादाय तस्य मुक्त-

प्राप्यत्वज्ञानाग्निदाह्यमृत्युपरत्वादेरेकादशपञ्चदशखण्डादौ वक्ष्यमाणत्वात् । नह्यज्ञानं मुक्तप्राप्यं ज्ञाननिवर्त्यान्मृत्योरपि परञ्च भवितुमर्हति; तस्यैव ज्ञाननिवर्त्यमृत्युरूपत्वादिति । 'आत्मा वा इदमेक एवाग्र आसीत्', 'ब्रह्म वा', 'एको ह वै नारायण आसी' दित्यादिकारणवाक्यान्तरैकार्थ्याच्चास्यापि सर्वज्ञत्वादिजगत्सृष्ट्यौपयिकसमस्तकल्याणगुणाकरदेवताविशेषपरत्वमास्थेयम्। अत्रापि समस्तचिदचिद्वस्तुष्वन्तर्यामितयाऽवस्थितमत एव सर्वोपादानमुपक्रान्तं वस्तु प्रस्तुत्य (५. ख.) 'एष सर्वज्ञ एष सर्वेश्वर एष सर्वाधिपतिरेषोऽन्तर्याम्येष योनिस्सर्वस्ये' ति वक्ष्यते । अयञ्च पुरुषसूक्तप्रतिपाद्यश्श्रीमान्नारयण इति च 'सहस्रशीर्षा पुरुष' इत्यादिना प्रथमखण्ड एव व्यक्तम् । त्रिभिः खण्डान्तरैर्जगत्कारणत्वशङ्कितदोषव्युदासाय ब्रह्मणो दोषगन्धराहित्यं, जीवस्य निर्दोषभोग्यभूतब्रह्मप्राप्तौ तदुपायभूतोपासनानुष्ठाने च तृष्णाजननाय संसरतो जागराद्यवस्थायोगनिबन्धनविविधदुःखाश्रयत्वं, परमात्मोपासनप्रकाराश्च क्रमेण प्रतिपाद्यन्ते । अथ षष्ठे 'इमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः .... माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः, सर्वं नारायणः । पुरुष एवेदं सर्वं .... तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः' इत्येवमनेको विशेषः । सप्तमे हृदयगुहान्तर्वर्तिनः 'यस्य पृथिवी शरीरम्' इत्यारभ्य 'स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति सर्वान्तर्यामित्वनारायणत्वादि । अष्टमे सर्वेश्वरत्वविद्वद्दृश्यत्वादि, नवमे सर्वास्तमयस्थानत्व प्रवचनाद्यलभ्यत्व शान्तिदान्त्यादिपूर्वदृश्यत्वादि, दशमे सर्वलोकानां तत्रोतप्रोतत्वम्, एकादशे मुमुक्षोरुत्क्रान्तस्य परदेवप्राप्तये प्रकृत्यपरपर्याय मृत्युपर्यन्तसर्वभेदनं, द्वादशे शरीरधाणार्थाशननियमः, त्रयोदशे बाल्यमौनपाण्डित्यादि, चतुर्दशे पृथिव्यादेस्स्वस्वकारणलयः, पञ्चदशे उत्क्रान्तेन जीवेन ज्ञानाग्निना प्रकृतिसंसर्गदाहेन नसन्नासन्नसदसत्परदेवविष्णुपुरुषनारायणपदोक्तदेवताविशेषप्राप्तिः, षोडशे एतदर्थग्रहणे-

ऽधिकारिनियम इत्येतदर्थसंग्रहः। नह्यत्र निर्विशेषं ब्रह्म प्रपञ्चाध्यासाधिष्ठानं, तत्त्वमस्यादिवाक्यजन्यस्तत्साक्षात्कार उपायः, नित्यं ब्रह्मण एव सतस्स्वस्याब्रह्मत्वभ्रमनिवृत्तिर्मुक्तिरिति प्रतिपादितमुपलभ्यते।

किञ्च 'तस्मात्तमस्संजायते, तमसो भूतादि' रित्येवमादिस्तत्रतत्र निर्देशःपरमते सर्वथा न सङ्गच्छते। तमःप्रभृतेस्सर्वस्याप्यनिर्वचनीयतया प्रतीतिसमय एव सत्ताया वाच्यत्वात्। तत्र ब्रह्मैव भ्राम्यतीति पक्षेपि ब्रह्मकर्तृकभ्रमस्य कादाचित्कत्वे सर्वदा सर्वज्ञत्वविरोधः। सार्वदिकत्वे तमआदेरपि तथात्वापत्तिरिति जायत इति न घटेत। किञ्च 'तस्मात्तमस्संजायत' इत्यस्य तमोऽध्यासाधिष्ठानं ब्रह्मेत्यर्थो न शब्दशक्त्या लभ्यते। न च पञ्चम्याः जनिधातोर्वा तादृशार्थगमकत्वम्। अध्यासाधिष्ठानत्वबोधकतया लोके कुत्रापि तदप्रयोगात्। मृदो घटो जायत इति हि प्रयोगः; न तु शुक्तेः रजतं जायत इति। अपिच सर्वस्यापि भ्रान्तिसिद्धत्वे उत्पत्तौ क्रमविशेषनिर्बन्धः कुतः किमर्थश्च? अविद्यारूपदोषवशादक्रमेणापि यथातथा वा भ्रमसंभवात्। निर्विशेषब्रह्मात्मैकत्वज्ञानादेव मुक्तिसिद्ध्या क्रमविशेषस्यास्याकिञ्चित्करत्वात्। सर्वस्यापि ब्रह्मण्यध्यस्तत्वप्रतिपादनमात्रेण ब्रह्मनिर्विशेषज्ञानसिद्धेः। एवं लयक्रमोप्यनुपयुक्त एव। एकाभावकल्पनानन्तरमेवान्याभावकल्पनेति निर्बन्धस्य निर्निबन्धनत्वात्। अस्माकं तु सर्वस्यापि सत्यतया तत्तत्पदार्थविशिष्टरूपेण तत्तत्पदार्थनिरूपितकारणत्वस्य ब्रह्मण्यनुसन्धाने कारणभूतब्रह्मोपासनं सुकरं भवतीति सप्रयोजनत्वं; न तु युष्मन्मते, कारणत्वस्योपहितनिष्ठतया कारणविज्ञानस्य मोक्षसाधनताया दुर्वचत्वात्। ब्रह्मनिर्विशेषत्वग्रहः खल्वपेक्षितः। सचाक्रमेण भ्रमेपि सिध्यतीति पूर्वमेवोक्तम्। नच वाच्यं मोक्षार्थं तदुपयोगाभावेपि अधिकारिविशेषे तत्तत्फलसाधनतत्तदचेतनवस्तुस्वरूपोपासनासिद्ध्य इतरव्यावृत्त्वज्ञानमपेक्षितमिति क्रमविशेषप्रतिपादनसाफल्यमिति। वस्तुसत्यत्वधिया तत्तद्वस्तूपासने परिणाम्युपादा-

नोपादेयक्रमस्यैवापेक्षिततया सर्वनिषेधोपयोगिविवर्तवादस्य तत्रायुक्तत्वात् । तमोऽवच्छिन्नब्रह्मण्येव महद्भ्रम इति क्रमस्याप्यासिद्धेश्च । न हि जलावच्छिन्नब्रह्मण्येव पृथिवीभ्रम इति नियमोऽस्ति । ब्रह्मोपदेशात्प्रागवगतविशेषमात्रानुवादे कथञ्चिद्ब्रह्मनिर्विशेषत्वप्रतिपादनतात्पर्यसंभवेऽपि तत्त्वोपदेशप्रवृत्तश्रुत्यैवाज्ञातानेकसृष्टिप्रलयवर्णने तत्तात्पर्यायोगश्च । अधिकारिविशेषफलविशेषयोर्मिथ्यात्वेन च तदर्थोपासनतदुपयोगिसर्गलयक्रमकल्पनायोगश्च । नह्येकवाक्यतया सर्वनिषेधस्थल एव नानाभ्रमसंपादनं संभवति । अलमधिकेन । तस्मात्सुबालोपनिषदपि परप्रतिकूलेति आसुबालं सुज्ञानमिति सिद्धम् ॥ १३ ॥

श्वेताश्वतरोपनिषत्तु चिदचिदीश्वररूपतत्त्वत्रयस्य बहुभिः प्रकारैस्स्वाभाविकपरस्परवैलक्षण्यप्रतिपादकं कञ्चन ग्रन्थं चिकीर्षतो भेदवादनिष्णातस्य निर्मास्यमानग्रन्थसुकरत्वाय तत्रतत्र विप्रकीर्णचिदचिदीश्वरप्रभेदप्रतिपादकप्रमाणजातसङ्कलनक्लेशं परिहरन्ती इतरनिरपेक्षं भेदवादेपूर्णमुपकरोतीति स्फुटं विश्वेषां विदुषाम् । अत एवात्राद्वैतवादस्य दुष्करतया, मन्ये, परे बहुमुखं प्रयत्य भाष्यविविधदीपिकाविवरणाभिधानानि व्याख्यानान्यकार्षुः । तदत्र तत्रतत्र तदुक्तमर्थं निरसितुं किञ्चिदुपन्यस्यते । अस्यामुपनिषदि पुरुषोत्तमादिसंज्ञागमकैः सर्वोत्कृष्टत्वावहैः चेतनाऽचेतनात्मकसमस्तप्रपञ्चकारणत्वतदौपयिकसर्वज्ञत्वसर्वशक्तित्वाद्यसंख्येयकल्याणगुणगणादिरूपैरसाधारणैराकारैःस्वेतरसमस्तचेतनाऽचेतनविलक्षणं नारायणाख्यं श्रीमत्परं ब्रह्मेति निर्धार्यते।

नन्वत्र – 'विश्वाधिको रुद्रो महर्षिः', 'तस्मात्सर्वगतश्शिवः', 'ज्ञात्वा शिवं सर्वभूतेषु गूढं', 'न सन्नचासच्छिव एव केवलः' इत्यादिभिरुमापतेः रुद्रस्यैव सर्वकारणत्वसर्वान्तर्यामित्वमुमुक्षूपास्यत्वादेः प्रतिपादनात्कथं श्रियःपतेर्नारायणस्येतरवैलक्षण्यमुत्कर्षः प्रतिपाद्यत इति प्रतिज्ञायत इति चेन्न – 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादिकारणवाक्यान्तरेण चतुर्मुखरुद्रादिदेवतान्तरनिषेधपूर्व-

कं नारायणस्यैव सर्वकारणत्वस्य सुस्पष्टं प्रतिपादिततया, तदविरोधायाऽत्यशिवरुद्रपदयोः केवलयौगिकत्वमङ्गीकृत्य भगवत्परत्वस्यैवावश्याश्रयणीयत्वात् । विष्णुनामसहस्रे च भगवन्नामान्तरैस्सहेदं पदद्वयमपि नामतया पठ्यते 'सर्वश्शर्वश्शिवस्स्थाणुः', 'रुद्रो बहुशिरा बभ्रुः' इति। एतेन 'स्वयंभूश्शम्भुरादित्यः', 'हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः' इत्यत्रैव पाठात् 'शम्भुराकाशमध्ये ध्येयः', 'हिरण्यगर्भस्समवर्तताग्रे' इत्यादि वचनान्तरमपि निर्व्यूढम् । चतुर्मुखस्यापि हि 'न ब्रह्मे' ति निषेधश्श्रूयते । 'अतश्च संक्षेपमिमं श्रुणुध्वं नारायणस्सर्वमिदं पुराणः । स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः॥', 'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः', 'सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते । वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परं', 'आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् । एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभु ॥', नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमं । ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥', 'सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते॥', 'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान्हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते पर' मित्याद्युपबृंहणवचनान्यत्रानुसन्धेयानि।सरस्वत्युमापत्योर्लक्ष्मीपतिकार्यत्वस्य 'आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततो भवः', 'तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यते' 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् । अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे । त्वञ्चैव क्रोधजस्तात पूर्वसर्गे सनातने' इत्यादिभिः प्रतिपादनान्न तयोस्सर्वकारणत्वशङ्कावकाशः । यथा चतुर्मुखरुद्रयोः कारणत्वनिषेधः नारायणकार्यत्वोक्तिश्चोपलभ्येते, नैवं नारायणस्य कारणत्वनिषेधः चतुर्मुखरुद्रकार्यत्वोक्तिश्चोपनिषत्सु, श्रीभारतश्रीविष्णुपुराणादिषु सर्वसम्प्रतिपन्नेषूपबृंहणेषु वा । अत्रापि रुद्रपदवाच्यस्य 'गिरिशन्त' इति रुद्रस्रष्टृत्वं प्रतिपाद्यते । गिरिशं तनोतीति गिरिशन्त इति हि तद्व्युत्पत्तिः । अतोऽपि रोदितृरुद्रजनको रुद्रः संसाररुग्द्रावकतया 'आ ब्रह्मस्तम्बपर्यन्ता जगदन्त-

र्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः ! यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः,'कर्मणां परिपाकत्वादाविरिञ्चादमङ्गलम् । इति मत्वा विरक्तस्य वासुदेवः परा गतिः॥'. 'संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् । विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायण' मित्यादिषूद्धुष्यमाणो नारायण एवेति सिद्धम् । अपिचात्र 'रुद्रो हिरण्यगर्भं जनयामास', 'यो ब्रह्माणं विदधाति पूर्वं' मिति रुद्रपदवाच्यस्य हिरण्यगर्भजनकत्वोक्त्या स नारायण एवेत्यभ्युपेत्यम् ; 'परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः', 'महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजन.', 'पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि' इत्याद्युपबृंहणेषु नारायणस्यैव चतुर्मुखजनकत्वप्रतिपादनात् । 'महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक' इत्यत्रोच्यमानं सत्त्वगुणोन्मेषहेतुत्वमेकमेव रुद्रादिपदबोध्यत्वं नारायणस्य सुदृढमवगमयति; तस्यैव 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः' इति मोक्षौपयिकज्ञानविशेषहेतुभूतसत्त्वगुणोन्मेषहेतुभूतकटाक्षशालित्वरूपसत्त्वप्रवर्तकतायाः प्रतिपादनात् । ब्रह्मरुद्रयोः 'पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुत' मित्यनन्तरमेव रजस्तमोगुणोन्मेषहेतुत्वस्यैवोक्तेश्च । किञ्चात्र 'सहस्रशीर्षः पुरुषः सहस्राक्षस्सहस्रपा' दित्यादिना पुरुषसूक्तप्रत्यभिज्ञापनात् 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वेन तत्र प्रतिपादितो नारायण एव एतदुपनिषत्प्रधानप्रतिपाद्य इत्यास्थेयम् । रूढ्या नारायणवाची अनन्तशब्दोऽप्यनन्तश्चात्मेति. अत्र श्रुतः । शिवशब्दश्चात्र मङ्गळवाची सन् 'मङ्गळानाञ्च मङ्गळं' 'न वासुदेवात्परमस्ति मङ्गलम्' इत्यादिषु परममङ्गळास्पदत्वेनाश्रितानां परममङ्गळहेतुत्वेन च प्रसिद्धं नारायणमाचष्टे ।

नन्विदं सर्वं तदा रमणीयं स्यात्, यदि नारायणशब्दो रुद्रपरो न स्यात् । स एव नाराणामयनं, नारा अयनं यस्येति वा व्युत्पत्त्या केवलयौगिकस्सन् रुद्रमेवाऽऽचष्टाम् ; रुद्रशिवशब्दयोरेव योगव्युत्पत्त्या नारायणपरत्वमित्यत्र गमकाभावा-

दिति चेन्न – णत्वस्य महतो बाधकस्य जागरूकत्वात् । ‘पूर्वपदात्संज्ञायामगः’ इति हि स्मृतिः । न हि रुद्रस्य नारायण इति संज्ञा क्वचिदुपलभ्यते । तस्मात् णत्वघटितं नारायणपदं ‘विष्णुर्नारायणः–कृष्ण’ इत्यादिकोशबलाद्वासुदेवस्यैव संज्ञेति नान्यशङ्कावकाशः । ‘पार्वत्या नारायणीपदवाच्यत्वस्य कोशादिनैव सिद्ध्या नारायणस्य पत्नी नारायणीति तद्व्युत्पत्त्या नारायणत्वं रुद्रस्य सम्भवतीति तस्यैव जगत्कारणत्वादिकं वक्तुं युक्त' मित्येतत्तु–‘नारायणीपतित्वेन रुद्रो नारायणो यदि । महिषीवल्लभत्वेन राजापि महिषो भवे' दिति पूर्वैरेवोपहसितम् । अयमस्याभिप्रायः – रुद्रस्य नारायणपदवाच्यत्वे प्रमाणलेशानुपलम्भे, पार्वत्या नारायणीपदवाच्यत्वमवलम्ब्य तत्साधनं नैव संभवति । नारायणीशब्दे पार्वतीशब्दादाविव व्युत्पत्त्यन्तरस्यैव सम्भवादिति । तस्मान्न वैपरीत्यशङ्कावकाश इत्यलमतिचर्चया ॥

अत्र प्रथमेऽध्याये ‘पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेती'ति श्रूयते । पूर्वं परमात्मनः भ्रामयितृत्वस्य, जीवस्य भ्राम्यमाणत्वस्य चोक्त्या तादृशपरमात्मानं तादृशस्वात्मानञ्च पार्थक्येन ज्ञात्वा तद्ज्ञानप्रीतेन परमात्मना प्रीतिविषयीकृतस्सन् मुक्तिं प्राप्नोतीति तदर्थः । ततश्च प्रेर्यप्रेरकभावलक्षणजीवपरभेदस्य परमार्थत्वमुक्तं भवति । अपरमार्थविषयकज्ञानस्यामृतत्वहेतुत्वासम्भवात् । अनन्तरमन्त्रः ‘संयुक्तमेतत्क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावाद्ज्ञात्वा देवं मुच्यते सर्वपाशै’रिति । व्यक्तं क्षरमित्यचेतनप्रपञ्च उच्यते; अव्यक्तमक्षरमिति चेतनरूपः।तदत्र मिथस्संयुक्तमिदं द्वयमीशो बिभर्तीत्युक्त्या। चिदचिदीश्वरतत्त्वत्रयं परस्परविलक्षणं प्रतिपादितं भवति। एवं ‘ईश इदं बिभर्ति, अनीश आत्मा कर्मफलभोक्तृभावाद्बध्यते । तादृशं देवं ज्ञात्वा च मुच्यत’ इत्युक्त्या ईश्वरत्वानीश्वरत्वाभ्यां बद्धत्वनित्यमुक्तत्वाभ्यां सर्वपाशाश्रयत्वतन्मोचकत्वाभ्याञ्च स्वाभाविकजीवपरभेदोपि । अथ ‘ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्व-

रूपोह्यकर्ता त्रय यदा विन्दते ब्रह्ममेतत् । क्षरं प्रधानममृताक्षरं हरः क्षरात्माना-वीशते देव एकः' इत्यादि । अत्रापि चिदचिदीश्वराणामज्ञत्व-भोग्यत्व-सर्वज्ञत्वादिभिः परस्परभेदः स्फुट एव । विश्वरूपमिति जगच्छरीरकत्व मुच्यते । अनन्त इति 'नान्त गुणानां गच्छन्ति तेनानन्तोऽयमुच्यत' इत्युपबृंहणानुसारादसंख्येयकल्याणगुणवत्त्वञ्च । एतत्त्रयं भोक्तृभोग्येश्वररूपं यदोक्तरीत्या परस्परविलक्षणतया जानाति, तदा ब्रह्मानुभववान् भवतीति त्रयमित्यादेरर्थः : एकः परमात्मा, क्षरणशीलं प्रकृतिरूपं वस्तु, अमृतमक्षरं भोगार्थं भोग्यवस्तुहर्तृ चेतनरूपं वस्तु च सर्वात्मना नियच्छतीति क्षरमित्यादेरर्थः । अत्र पूर्वं चिदचितौ व्युत्पाद्य क्षरात्मानाविति तयोरनुवादात् क्षरं प्रधानमितिवत् अमृताक्षरं हर इति चेतनव्युत्पादनात् हरशब्दो जीवपरः । नह्येकेनैमामृताक्षरपदेन व्युत्पादनं शक्यम् । उद्देश्यविधेयभावस्य विभिन्नपदकार्यत्वात् । अन्यथा एकप्रसरताभङ्गात् । हरशब्दो यौगिकः । रूढ्यादरणे तु रुद्रमुखेन सर्वजीवोपलक्षकः ।

यत्त्वत्र पृथगित्यादेः परेषां व्याख्यानं– 'केन हेतुना नानायोनिषु परिवर्तते । तत्राह – पृथगित्यादि । जीवात्मानमीश्वरञ्च भेदेन ज्ञात्वा संसारे परिवर्तत इत्यर्थः । मुक्तिहेतुमाह – जुष्ट इत्यादिना । ईश्वरेण सेवितश्चित्सदानन्दाद्वितीयब्रह्मात्मना अहं ब्रह्मास्मीति समाधानं कृत्वेत्यर्थः । तेनेश्वरसेवनादमृतत्वमेति' इति – तदसत् । मत्वेत्यन्तस्य 'जुष्टस्ततस्तेनामृतत्वमेती' त्यनेनान्वयस्यैव स्वरससिद्धतया निराकाङ्क्षेण 'अस्मिन् हंसो भ्राम्यते ब्रह्मचक्र' इति पूर्वेणान्वयस्यात्यन्तानुचितत्वात् । संसारी भवतीत्यध्याहारे च तस्यैव दोषत्वात् । मत्वेत्युक्तमननस्यैव जुष्टस्तेन इति तच्छब्देन परामर्शाच्च । त्वन्मते तद्वैयर्थ्यं, तत्परामर्शनीयपूर्वोक्तार्थाभावात् । प्रमाणान्तरविरोधाच्च । 'समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इति स्वस्मादन्यत्वेनेश्वरज्ञानस्यैव मोक्षहेतुत्वोक्तेः । अत्रापि 'भोक्ता भोग्यं प्रेरितारञ्च

मत्वे '. ति तत्त्वत्रयभेदज्ञानस्यैव मोक्षसाधनत्वं श्रूयते । अत्र भोक्तृत्वाद्याकारपुरस्कारेण तत्त्वत्रयोपादानात् मत्वेति मननं भेदविषयमिति सुव्यक्तम् । त्रिविधमित्युक्तेश्च । नह्यत्र पूर्वत्र परत्र वा संसारकथनाभावादीदृशकुसृतिकल्पनावकाशः । प्रत्युत ब्रह्ममिति मुक्तेरेव फलतया कथनाच्च । सर्वञ्जगत् भोक्तृभोग्यप्रेरितृरूपं परस्परविलक्षणं ज्ञात्वा ब्रह्म भवतीति तदर्थः । किञ्चात्र आमूलाग्रं पुनःपुनर्बहुभिः प्रकारैश्चिदचिदीश्वरतत्त्वत्रयभेदस्यैवाऽऽदरेणाभ्यसनाद्भेदस्य पारमार्थिकत्व एव श्रुत्यभिमतिरिति तादृशभेदज्ञानस्य संसारहेतुत्ववर्णनं साहसमेव। 'तेन जुष्ट' इत्युक्ते 'चित्सदानन्दाद्वितीयब्रह्मात्मनाऽहं ब्रह्मास्मीति समाधानं कृत्वा' इत्यर्थः केनोपायेन सम्पादित इति न विद्मः । किञ्च तेनेति तत्पदमीश्वरपरं ब्रह्मपरं वा; आद्ये चित्सदानन्देत्यादिविवरणानुपपत्तिः । द्वितीये तेनेश्वरेणेति विवरणानुपपत्तिः । 'ईश्वरसेवनादमृतत्वमेती' त्यप्यसाधु । निर्गुणब्रह्मज्ञानाद्धि मुक्तिस्तन्मते । सेवित इति जुष्टपदाविवरणमप्यसङ्गतम् । नहीश्वरोऽधिकारिणं सेवते; तथा सेवयाऽधिकारिणो मुक्तिर्वा। 'न च वाच्यं 'तेने' ति तत्पदं निर्विशेषब्रह्मपरम् । तृतीया चाभेदे । तदभिन्नश्च सेवाविषयीभूतस्सेवक एव । सेवा च अहं ब्रह्मास्मीत्येवं समाधिरूपा । ततश्च चित्सदानन्देत्याद्युक्तार्थलाभ' इति ; अस्याशब्दार्थत्वात् ; निर्विशेषब्रह्मणो ऽप्रामाणिकत्वात् ; सगुणेश्वरस्यैवात्र प्रकृतत्वात् ; अहं ब्रह्मास्मीत्यनुसन्धानस्य भेदप्रतिपादकबहुप्रमाणानुरोधेन भेदगर्भत्वस्यैवावश्यकत्वात् ; 'ईश्वरसेवनान्मुक्ति' रिति स्वोक्तिविरोधाच्च । 'तेनाधिकारिणा सेवित ईश्वर इति पृथग्वाक्यम् । अमृतत्वमेतीत्यत्र सेवक इति कर्त्रध्याहार' इत्यप्यसङ्गतम् । वाक्यभेदायोगात् । तेनेश्वरेणेति विवरणविरोधात्, ईश्वरसेवनस्य तन्मते मुक्तिहेतुत्वासम्भवाच्च । ततो जीवेश्वरभेदात् जुषधातोस्सेवनवत्प्रीतावपि स्मरणात्परमात्मप्रीतिविषयस्सन्मुक्तिमेतीत्येवार्थ इति पूर्वार्धेन जीवस्य संसारे

भ्रमणमुत्तरार्धेन जविपरभेदज्ञानेन तन्निवृत्तिश्च प्रतिपाद्यत इत्ययमेव स्वरसः पन्थाः।

यत्त्वत्र भेददर्शनस्य संसारहेतुत्वे 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति। तस्य ह न देवाश्च नाभूत्या ईशते, आत्माह्येषां स भवति, अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति, न स वेद। यथा पशुरेवं स देवाना'मिति बृहदारण्यकवाक्यं प्रमाणतयोपन्यस्तं, तन्न, पारमार्थिकभेदप्रतिपादकप्रमाणसहस्रानुगुण्यात् ऐक्यस्वरूपविवेचकशास्त्रानुरोधाच्चोक्तवाक्यस्याप्रामाणिकभेदविशेषैक्यविशेषज्ञानयोरेव संसारमोक्षहेतुत्वप्रतिपादनपरताया आश्रयणीयत्वात्। तत्र भेदप्रतिपादकप्रमाणजातं नेदानीं विशिष्य प्रदर्शनीयं, सर्ववेदान्तानामपि प्रायशस्तादृशवाक्यप्रचुरत्वात्। यत्रयत्र जीवब्रह्मणोर्मुक्तावैक्यं श्रुतं, तत्र सर्वत्र स्वरूपैक्यं न तदर्थः, अपितु वास्तवभेदाविरोध्यैक्यविशेष एवेत्येतदपि श्रुत्यैव सिद्धम्। 'तस्मिन्नेव यजमानास्सैन्धवघन इव लीयन्ति, एषा वै ब्रह्मैकता नाम, अत्र हि सर्वे कामास्समाहिताः' इति हि 'ब्रह्म वेद ब्रह्मैव भवती' त्यादिवाक्यप्रतिपादितमुक्तिकालिकैक्यविषया श्रुतिः। उपासनाङ्गभूतं यज्ञादिकं कुर्वाणा उदके प्रक्षिप्तलवणखण्ड इव परमात्मनि लीयन्ते। इदमेव 'ब्रह्मैव भवती' त्यादिषूक्तमैक्यमिति तदर्थः। अत्रोदकलवणदृष्टान्तस्वारस्याज्जीवपरयोर्मुक्तिकालेऽपि स्वाभाविकभेदोस्तीति प्रतिपादितं भवति। एतच्छ्रुतिवाक्यतात्पर्यं परपक्षनिराकृतौ (पु०. ६१ - ६२) द्रष्टव्यम्। तथाच 'तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मी' त्यादेरयमर्थः। एतस्मिन्नपि काले, तदिदं ब्रह्माहमस्मि, सर्वात्मकब्रह्मात्मकोहमस्मीत्येवं योयो वेद, स सर्वोपीदं सर्वं भवति, एतत्सर्वात्मकब्रह्मपर्यन्ताविर्भाववान् भवतीति। अयमेवचार्थ आश्रयणीयः। प्रकरणेस्मिन 'ब्रह्म वा इदमग्र आसीत्। तदात्मानमेवावेदहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत्। तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत्। तथर्षीणां, तथा मनुष्याणां, तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेती' ति। अत्रोपास्यान्तरशून्यमत-

एव परमोपास्यं ब्रह्म सर्वमभवदिति प्रतिपाद्य 'तद्योय' इत्यादिना एव मुपास्यान्तरशून्यं ब्रह्म जानतस्सर्वैकात्म्यसाक्षात्काररूपं फलमुच्यते। अवेदहं ब्रह्मास्मीत्यत्र ब्रह्मपदं परमात्ममात्रपरम्। 'वेदाहं ब्रह्मास्मी' त्यत्र ब्रह्मपदं तु ब्रह्मात्मकपरम्। शरीरवाचकशब्दस्य शरीरिपर्यन्तत्ववच्छरीरिवाचकशब्दस्य तद्वाच्यं प्रति शरीरभूतवस्तुपरत्वस्यापि मुख्यत्वं तत्रतत्र सयुक्तिकं स्थापितं पूर्वाचार्यैः। अस्तु वा अवैरूप्याय सर्वत्र ब्रह्मपदं परमात्मपरमेव! अहंशब्द एवत्वन्तर्यामिपर्यन्ते मुख्यतम इति स्थितं भाष्यादिषु। अत्र 'अहं ब्रह्मासमी' त्युक्तोपासनस्य जीवपरैक्यविषयत्वं 'इदं सर्वं भवती' त्युक्तफलस्य सर्वतादात्म्यरूपत्वञ्च हि परेणाश्रयणीयम्। तच्चानुपपन्नम्। 'योयः प्रत्यबुध्यत, स तदभव' दिति सर्वभावस्य ज्ञानफलत्वावगमात्, सर्वतादात्म्यस्य पूर्वमेव विद्यमानस्य फलत्वायोगात्। तत्साक्षात्कारस्य फलत्वमपि न संभवति, तत्त्वज्ञानकाले ब्रह्मव्यतिरिक्तस्य तत्त्वतोऽभावात्तत्तादात्म्यसाक्षात्कारस्य दुर्वचत्वात्। एवं वामदेवविषयेप्यनुसन्धेयम्। किञ्चात्र यथा ब्रह्म सर्वमभवत् तथा देवादिरिति दृष्टान्तदार्ष्टान्तिकभावकथनात् ब्रह्मजीवयोर्भेदस्सिद्धः। 'योयो देवानां, तथर्षीणां, तथामनुष्याणा'मिति प्रत्येकमुक्तिकथनादेकजीववादोपि निरस्तः। एवं ब्रह्मणः अहं ब्रह्मास्मीति ज्ञानवत्त्वे सगुणत्वापत्तिः। तदभावे सर्वभावस्यापि तथैवाभावाद्दृष्टान्तासिद्धिः। ब्रह्म सर्वमभवदित्यस्य सर्वं निवृत्तमित्यर्थे तु जीवानामपि निवृत्ततया केनोपासनं कर्तव्यमुपर्युच्यते। अतोऽत्र भवन्मते वाक्यार्थो दुर्निरूपः। 'आत्मानमेवावै' दित्येतद्ब्रह्मणो वेद्यान्तरनिषेधपरं, न तु स्वस्य वेद्यत्वविधिपरम्; अवाप्तसमस्तकामस्य ब्रह्मणो यत्किञ्चित्फलार्थमुपासनस्यैवासम्भवात्। ब्रह्मणस्सर्वभावस्य स्वाभाविकसर्वान्तर्यामित्वानुभवरूपस्य यत्किञ्चिदुपासनफलत्वायोगाच्च। ततश्च ब्रह्म किं वस्तूपास्य सर्वमभवदिति प्रश्ने 'ब्रह्मण उपास्यं न किञ्चिद्वस्त्वन्तरमस्ति। तत्सर्वभावश्च नोपासनफलम्; अपितु स्वाभाविक एवे' त्यभिप्रायेण 'तदा-

त्मानमेवावैत्, तस्मात्तत्सर्वमभव' दित्युत्तरमुच्यते । भवद्भिरपि ब्रह्मोपास्यकिञ्चिद्वस्तुनिषेध एव वाक्यतात्पर्यमेष्टव्यम् । एवं ब्रह्मान्तर्यामिकस्वात्मविदामृषीणां मनुष्याणाञ्च सामान्यतः सर्वात्मकत्वं फलमुक्त्वा व्यक्तिविशेषे तदाह – 'तद्धैत' दित्यादिना। तदेतद्ब्रह्म उपासीनो वामदेवो 'मदात्मैव मन्वादीनामात्मे' ति प्रतिपेदे, मन्वादिना सर्वेण स्वस्यैकात्म्यं साक्षात्कृतवानिति तदर्थः । अत्र 'अहं मनुः सूर्यः' इति पदत्रयं तत्तच्छरीरकपरमात्मपरं वेदितव्यम् । ब्रह्मात्मकस्वात्मविदां निरुक्तसाक्षात्कारादिकमुक्त्वा अनीदृशामनर्थमाह । अथ योऽन्या' मित्यादिना । यः पुमान् धारकत्वनियन्तृत्वादिना धर्मेणाऽऽत्मतया स्वस्मादत्यन्तविलक्षणां परमात्मरूपां देवतां 'असौ अन्यः धारकत्वनियन्तृत्वादिनाऽऽत्मभूतादन्यः । अहञ्च धार्यत्वनियाम्यत्वादिना तच्छरीरभूतादन्य' इत्येवमुपास्ते, सोऽज्ञो देवकिङ्करो भवतीति तदर्थः। 'असावन्यः अहमन्यः' इत्येवंरूपेण यो देवतामुपास्ते इत्येतावन्मात्रेणापि देवतोपासनस्यान्यत्वप्रकारकत्वसिध्द्या 'अन्या' मिति देवताया अन्यत्वविशेषणं वस्तुतो विद्यमानान्यत्वानुवादरूपमेवेत्यास्थेयम् । तस्य विधेयविशेषणत्वे वैयर्थ्यं स्फुटमेव । 'अन्यां देवता' मिति वचनशैल्याप्यनुवादरूपत्वमेवास्य प्रतीयते । अथ यो देवतामन्यामिति हि तदा भाव्यम्। ततश्च भृत्यादिः केवलस्वामिभूतं राजादिकं कस्मैचित्फलाय 'सोऽयं कोपि, अहमपि स्वतन्त्रः कश्चने'त्यनुसन्दधानो यथोपास्ते, तथोपासने न मुक्तिस्सिध्येत्, तादृशोपासनस्यायथार्थविषयकत्वादिति निर्गळितार्थः । इत्थञ्चानेन प्रकरणेन स्वस्य ब्रह्मापृथक्सिद्धप्रकारत्वरूपब्रह्मैक्यविशेषविषयकज्ञानस्य तत्साक्षात्काररूपमुक्तिः फलम् । स्वस्य ब्रह्मणश्चापृथक्सिद्धप्रकारप्रकारि शरीरात्मभावानादरेण, केवलाग्नीन्द्रादिदेवतान्तरोपासनवत्क्रियमाणस्य केवलभेदगर्भस्य अत एव भेदविशेषविषयकस्य परमात्मज्ञानस्य संसारहेतुत्वञ्चोच्यते । न तु जीवपरैक्योपासनादीति सिद्धम् ।

यच्चात्र 'पश्यत्यात्मानमन्यं तु यावद्वै परमात्मनः । तावत्संभ्राम्यते ज-

न्तुर्मोहितो निजकर्मणा । संक्षीणाशेषकर्मा तु परं ब्रह्म प्रपश्यति ' इति भेदाभेदज्ञानयोस्संसारमोक्षहेतुत्वे श्रीविष्णुधर्मवचनमुपन्यस्तं, तदपि न स्वाभिमतसाधकं, ' निर्दोषं हि समं ब्रह्मे ' त्यादि प्रमाणेन परिशुद्धजीवस्वरूपस्य अपहतपाप्मत्वादिभिः परमात्मनात्यन्तसाम्यस्य प्रतिपादितत्वेन परमात्मविसदृशत्वेनात्मज्ञानस्य बन्धहेतुत्वम् उक्तैर्धर्मैःपरमात्मात्यन्तसदृशत्वेनात्मज्ञानस्य मोक्षहेतुत्वञ्च ह्यत्रोच्यत इति । जीवपराभेदस्य ' परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतत् , अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत ' इत्यादिशास्त्रैर्निषिद्धत्वात् । यत्त्वत्र, तद्द्रव्यतां नैतीति यत् , तन्मिथ्येति योजनं, तन्न, ' यत ' इति पञ्चम्यनन्वयात् । यदिति हि तदा भाव्यम् । इष्यत इत्यनेन पूर्वार्द्धोक्तस्य परमतत्वसूचनेन तस्यैव निषेध्यत्वेनाभ्युपगन्तव्यत्वाच्च । एतच्छब्दस्य वक्ष्यमाणपरत्वापेक्षया, उक्तपरत्वस्यैव स्वरसत्वाच्च । अत्रापि वचने ' संक्षीणाशेषकर्मेति ' ति परब्रह्मसाम्यप्रजोजकमेव मुक्तबन्धत्वमाह । निर्दोषं समं ब्रह्मेतिह्युक्तम् । अत इदं वचनमस्मदनुकूलमेवेति सिद्धम् ।

यत्तु कस्यचित् ' पृथगात्मान ' मित्यादेर्व्याख्यानं ' पृथक्—संसारचक्रादन्यरूपमात्मानं सर्वप्रियतमं प्रत्यग्भूतं, प्रेरितारञ्च – प्रवर्तयितारमीश्वरमेव मत्वा ततस्साक्षात्कारात्तेनेश्वरेण जुष्टः स्वात्माभेदेन परमां प्रीतिं नीतोऽमृतत्वं गच्छती ' ति, तदप्येतेन निरस्तम् । जीवेश्वराभेदस्य बहु शास्त्रनिषिद्धत्वात् । ' पृथगात्मानं प्रेरितारञ्च मत्वे ' त्युक्तौ पृथक्पदस्य मत्वेत्युक्तमननक्रियाप्रकारभूतपृथक्त्वोपस्थापकत्वस्यैव स्वारसिकत्वात् । स्वरसत आत्मप्रेरयित्रोः परस्परभेदस्यैव पृथक्पदेन प्रतीत्या तस्य संसारचक्रादिप्रतियोगिकत्ववर्णनायोगात् । चकारस्य एवकारार्थकत्वायोगात् । निर्विशेषब्रह्मव्यतिरिक्तजीवतुल्ययोगक्षमप्रेरकेश्वरमननेन मुक्त्यसम्भवाच्च । यदप्यन्यस्य व्याख्यानं ' पृथक् – संघाताद्भिन्नं, प्रत्येकतश्च भिन्नमात्मानं, एवमेव तस्मादेव भिन्नमीश्वरञ्च मत्वे ' ति, तत्तस्यैव प्रतिकूलम् जीवेश्वरभेदस्य सुप्रतिष्ठितत्वात् । आत्मानमीश्वरञ्च संघाताद्भिन्नं,

मत्वेत्युक्तौ जीवेश्वरभेदस्य चकारदत्तहस्तावलम्बनतया साम्राज्यात् । पृथक्पदव्याख्यानास्वारस्यमवस्थितम् ।

यत्त्वपरस्य कस्यचिद्व्याख्यानं 'महाकाशस्थानीयपरमात्मनस्सकाशात् घटाकाशस्थानीयमात्मानं स्वत एव भिन्नं मत्वा, प्रतिबिम्बस्थानीयादात्मनस्सकाशाद्बिम्बस्थानीयं परमात्मानञ्च परमार्थतो भिन्नं मत्वा संसारचक्रे परिभ्रमती' ति–तदप्यस्य प्रमेयशरीरस्य निष्प्रमाणत्वात् पूर्वार्द्धेनान्वये दोषाणामुक्तत्वाच्च निरस्तं वेदितव्यम् । तस्मात् पृथगात्मानमित्यादेर्यथोक्त एवार्थ इति विपश्चितो विदांकुर्वन्तु ॥

यदपि – संयुक्तमित्यादेर्विवरणम् 'ईश्वरः क्षरमक्षरञ्च संयुक्तं बिभर्ति, अनीश्वर आत्मा बध्यत इत्ययं भेद औपाधिकः । निरुपाधिकमीश्वरं ज्ञात्वा मुच्यत' इति – तन्न, निरूपाधिकभेदस्यैव स्वरसतः प्रतीतेः । 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः.... बिभर्त्यव्यय ईश्वर' इत्युपबृंहणानुरोधेन भेदस्य स्वाभाविकत्वस्यैवाश्रयणीयत्वाच्च । न हि तत्र भेदौपाधिकत्वं प्रतिपत्तुं शक्यम् 'उत्तमःपुरुषस्त्वन्य' इत्यन्यत्वमुक्त्वा 'यो लोकत्रय' मित्यादिना तदुपपादनात् । भर्तव्याद्भर्तृ नियाम्यान्नियन्तृ व्याप्याद्व्यापकमत्यन्तभिन्नमेष्टव्यमिति हि 'य' इत्यादेस्तात्पर्यम् । अत्र 'आकाशमेकं ही'त्यादिवचनोपादानमप्यसङ्गतम् । उभयसामञ्जस्यादेव' मिति सूत्रकारैरेव तस्य तदभिमतार्थकत्वस्य निराकृतत्वात् । वक्ष्यते चैतत्तृतीये सूत्रभाग इत्यलम् ।

यदपि 'ज्ञाज्ञा' वित्यादेर्व्याख्यानं 'जीवेश्वरयोरजत्वमविकृतस्य ब्रह्मण एव तद्रूपेणावस्थानात् । भोक्तृभोग्यलक्षणः प्रपञ्चो यदि सिध्येत्तदा उक्तेश्वरत्वानीश्वरत्वसर्वज्ञत्वाज्ञत्वादिव्यवहारस्सिध्येत् । नह्यद्वैतवादे सोऽस्ति । कूटस्थापरिणाम्यद्वितीयब्रह्मणो वस्तुतः प्रपञ्चरूपत्वायोगात् । भोक्त्रादिप्रपञ्चहेतोरन्यस्य कस्यचिदभावात् । भावेऽद्वैतहानिप्रसङ्गादित्यत्राह अजामिति । अजा–माया, सैव प्रपञ्चादिरूपेण परिणमते । तस्या अवस्तुत्वेन नाद्वैतभङ्ग इति भावः । यतो मायैव भोक्त्रादिरूपा, ततस्तदारब्धस्य प्रपञ्चस्य मिथ्यात्वेनात्मा अनन्तः देशकालवस्तु-

परिच्छेदरहित एव भवति । चकारोऽवधारणार्थः । विश्वमस्यैव रूपमिति विश्वरूपः । वाचारम्भणन्यायेन रूपिव्यतिरेकेण रूपाभावादपि आत्मन अनन्त्यं सिद्धमिति भावः । त्रयं – भोक्तृभोग्येश्वरात्मकं यदा ब्रह्म विन्दते= मायात्मकत्वेनाधिष्ठानभूतब्रह्मव्यतिरेकेण नास्तीति जानाति, तदा मुच्यत इति त्रयमित्यादेरर्थः । पूर्वं संयुक्तमेतदित्यादिना जीवेश्वरविभागप्रदर्शनपूर्वकं तदज्ञानस्य मुक्तिहेतुत्वमुक्तम् । इदानीं क्षरं प्रधानमित्यादिना प्रधानेश्वरवैलक्षण्यप्रदर्शनपूर्वकं तद्विज्ञानस्य मुक्तिहेतुत्वमुच्यते । अविद्यादेर्हरणात्परमेश्वरो हरः । अमृतश्च तदक्षरश्चामृताक्षरम् । अमृतं ब्रह्मैवेश्वर इत्यर्थः । सः क्षरात्मानौ प्रधानपुरुषावीष्टे, देव एकश्चित्सदानन्दाद्वितीयः परमात्मा । तस्य परमात्मनोऽभिध्यानात् जीवानां परमात्मसंयोजनात्, अहं ब्रह्मास्मीति तत्त्वभावात्, भूयश्चासकृत्, अन्ते – प्रारब्धकर्मान्ते, स्वात्मज्ञानोदयवेळायां वा सुखदुःखमोहात्मकाशेषप्रपञ्चरूपमायानिवृत्तिरिति 'तस्याभिध्यानादित्याद्यर्थ' इति –

तदपि न; जीवेश्वरयोर्मायायाश्चाविशेषेणाजत्वे श्रूयमाणे 'ब्रह्मण एव जीवेश्वररूपेणावस्थानात्तयोरजत्वं, मायायास्तु तथा ने' ति वैषम्यवर्णनस्य निर्युक्तिकत्वात् । तस्याः ब्रह्मात्मकत्वं प्रमाणविरुद्धमिति चेत्तुल्यम् । 'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि' इत्येवं प्रकृतेरिवावरपुरुषस्यापि स्वातन्त्र्येणैवानादित्वप्रतिपादनात् । ब्रह्मातिरिक्तस्येश्वरस्य शशविषाणायमानत्वाच्च । 'परं ब्रह्म परं धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् । आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासस्स्वयञ्चैव ब्रवीषि मे' इति भगवद्गीतावचनेन सकलकल्याणगुणविशिष्टस्य सर्वजगन्नियमनैश्वर्ययुक्तस्य परमात्मन एव परब्रह्मताया नारदाद्यनेकमहर्ष्यभिमतत्वप्रदर्शनात् । सकलेतरविसजातीयभगवदसाधारणश्रोतृनिरतिशयानन्दजनकबहुविधकल्याणगुणयोगं तदैश्वर्यञ्च श्रुत्वाह्यर्जुन एवमुवाच । न तु 'मय्येव सर्वमिदमध्यस्तम् ! अतो मद्व्यतिरिक्तं किमपि नास्ती' ति भगवन्मुखान्निर्विशेषशुद्धचैतन्यं श्रुत्वा । 'एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वत 'इत्यादि हि पूर्वप्रकृतम् ।

एवंजातीयकानि बहून्युपबृंहणवचनानि वेदितव्यानि । अतो जीववदीश्वरस्य ब्रह्मापेक्षया भेदवर्णनमतिसाहसमेव । अत्र अजापदमविद्याऽज्ञानादिशब्दितानिर्वचनीयमायापरमित्येतदप्यसङ्गतं, तादृशवस्तुन एवाप्रामाणिकत्वात् । 'द्वावजौ, एका ह्यजा' इति नित्यवस्तुत्रयस्य, सर्वज्ञत्वासर्वज्ञत्वभोगरूपप्रयोजनसम्पादकत्वरूपैस्तत्तदसाधारणैर्धर्मैः परस्परवैलक्षण्यप्रतिपादनैदम्पर्ये स्वरसतः प्रतीयमाने तदपह्नवेन ज्ञत्वाज्ञत्वादि विलक्षणव्यवहारसिद्धिमूलभूतभोक्तृभोग्यादिलक्षणमिथ्याभूतप्रपञ्चसिद्धिहेतुभूततादृशमायाऽस्तित्वप्रतिपादनपरतया अजाह्येकेत्यादेरवतरणमनुपपन्नं प्रमाणविधुरं प्रकरणविरुद्धञ्च। न हि भवताऽण्वप्यत्र प्रमाणशकलमुपलब्धम् । सर्वत्रैवमेवात्यन्तक्लिष्टगत्यैव त्वदभिमतस्य संपादनीयत्वात्; तथैव सम्पादितत्वाच्च। एवं अजाह्येकेत्यादेरनन्तश्चात्मेत्युक्तात्मानन्त्योपपादकत्ववर्णनमप्यस्वरसमसङ्गतञ्च। अत्रोपात्ताजाया मिथ्यात्वस्यात्र केनापि पदेनाबोधनात् । निष्प्रमाणप्रकृतिमिथ्यात्वाङ्गीकारेऽपि, अजाहीति हिशब्दस्य हेतुपरत्वाश्रयणेऽपि नाजागतमिथ्यात्वस्य हेतुत्वं सिद्ध्येत् ; तस्य पदेनानुपस्थितेः । हिशब्दस्य हेतुपरत्वनिर्बन्धे यस्माज्जीवभोगसम्पादिनी प्रकृतिर्विद्यते तस्माद्ब्रह्मतुल्यस्य शुद्धस्य जीवस्वरूपस्याज्ञत्वादिकं सम्भवतीत्ययमेवार्थोऽबाधितत्वात् 'अनीशया शोचती'त्यादिप्रमाणानुगुण्याच्चाश्रयणीयः; न तु प्रकृतेर्मिथ्यात्वात्प्रमश्चसम्भवः; तत एव नाद्वैतहानिरित्यादिः । त्रिविधपरिच्छेदराहित्यान्तर्गतं वस्तुपरिच्छेदराहित्यं वस्त्वन्तरराहित्यरूपमित्येतदपि स्वकल्पितमेव, अनन्तरश्रुतविश्वरूपपदविरोधात् । स्पष्टञ्चेदं परपक्षनिराकृतौ (पु. १५९ १६२) । विश्वमस्य रूपमिति विश्वरूपपदं विगृह्णतैव विश्वरूपपदस्य विश्वराहित्यपरत्ववर्णनमप्यद्भुतम् ; रूपरूपिणोर्भेदस्यैव तेन प्रतिपादनात् । पीताम्बरो हरि रित्यत्र पीताम्बरपदस्य दिगम्बरत्वपरत्ववर्णनमिवेदमिति । वाचारम्भणमित्यादेः कार्यमिथ्यात्वपरत्वन्तु पूर्वमेवोन्मूलितम् । त्रयं यदे त्यादेर्ब्रह्मव्यतिरेकेण त्रयं

नास्तीति यदा जानातीत्यर्थवर्णनमपि हेयम् । न हि त्रयं ब्रह्म विन्दत इत्युक्तौ ब्रह्मव्यतिरेकेण नास्तीति सिद्ध्येत् । 'तदा मुच्यत' इत्यध्याहारप्रसङ्गश्च । अस्माकं त्वनुक्तमपि भवतीत्येतद्ध्रियत एव; 'अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्ती' ति न्यायात् । यत्त्ववतरणं क्षरं प्रधानमित्यादेः, जीवेश्वरविभागज्ञानस्य मुक्तिहेतुत्वं पूर्वमुक्तम् । प्रधानेश्वरविभागज्ञानस्य तद्धेतुत्वमिदानीमुच्यत' इति । तदेतद्भेदवादानुकूलं वा, अभेदवादानुकूलं वेति मध्यस्थाः परामृशन्तु । देव एक इत्यस्य चित्सदानन्दाद्वितीय' इति विवरणमपि विरुद्धम् । ईशत इति तस्य सर्वनियन्तृत्वोक्त्या नियाम्यसर्वप्रपञ्चवैशिष्टयस्यैव प्रतीतेः । देवपदेन क्रीडादिरूपबह्वर्थप्रतीतेश्च । तत्त्वभावादित्यस्य अहं ब्रह्मास्मीति तत्त्वभावादिति विवरणमपि जीवपरैक्यायोगादेव निरस्तम् । अतस्तत्त्वस्य भाव आविर्भाव इत्येव व्याख्येयम् । विश्वमायेत्यत्र मायापदमपि विविधाश्चर्यप्रपञ्चसृष्टिहेतुभूतां ब्रह्मवत्सत्यां प्रकृतिमाचष्ट इत्येतदप्यन्यत्र स्थापितम् । अन्ते इत्यस्य 'स्वात्मज्ञानोदयवेळायामिति विवरणमप्यसङ्गतम् ; ज्ञानोदयमात्रेण विश्वनिवृत्तेरदर्शनात् । जीवन्मुक्तः प्रमाणशून्यत्वादिना निरस्तत्वाच्च । अतः प्रारब्धकर्मावसाने उपासको बन्धान्मुच्यत इत्येव तदर्थः, तस्य तावदेव चिरमितिवत् इति ।

यत्त्वत्र 'उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाक्षरञ्चे' त्यस्य व्याख्यानम् – 'भोक्तृभोग्यप्रेरितृरूपं त्रयं ब्रह्मणि प्रतिष्ठितं रज्ज्वामिव सर्प' इति तदप्यनुपपन्नम् ; ब्रह्मातिरिक्तस्य प्रेरकस्य गगनारविन्दसोदरत्वस्योक्तत्वात् । प्रतिष्ठितशब्दस्याध्यस्तवाचकत्वासम्भवात् । अध्यासादेर्निष्प्रमाणकत्वस्यासकृदुक्तत्वाच्च । तस्मात्प्रकृति पुरुषकालरूपं त्रयं ब्रह्मण्याश्रितमित्येव तदर्थो वाच्यः । 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक' इति पूर्वं कालाधिष्ठातृत्वस्योक्ततयाऽत्र तृतीयत्वेन स एव ग्राह्यः । कालस्यापि परमात्मायत्तस्वरूपस्थितिप्रवृत्तिकत्वं हि तत्रोक्तम् । अत्रापि तदेवोच्यत इति युक्तं प्र-

तिपत्तुम् । किञ्चात्र बहुभिर्दृष्टान्तैरत्यादरेण जीवात्मनि परमात्मा वर्तत इत्युपपादनात् स्फुटतरो जीवपरभेदः । 'आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥' 'तिलेषु तैलं दधनीव सर्पिरापस्स्रोतस्स्वरणीषु चाग्निः । एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति' इति । अत्र आत्माऽऽत्मनीति तिलतैलादिवद्भेदोऽप्युच्यते । नच प्रणवेन देह इत्युपक्रमानुसारात्सप्तम्यन्तमात्मपदं देहपरमिति शङ्क्यम् । तस्याप्युपक्रमे आत्मसंस्थ मित्यात्मवर्तित्वोक्तेः । एकं देहपदमादाय आत्मसंस्थं, आत्मानमरणिं, आत्मनि गृह्यते इत्यात्मपदत्रयस्य देहलक्षकत्वाश्रयणापेक्षया देहपदस्य शरीरपरत्वाप्रहाणेनैव परमात्मशरीरभूतजीवपरत्वाश्रयणस्यैव न्याय्यत्वात् । यस्यात्मा शरीरमिति हि श्रुतिः । किञ्चात्र सर्वव्यापिनमात्मानमित्युच्यमानमात्मनस्सर्वव्यापित्वमेकमेव सर्वं परपक्षं निराकर्तुमलम् । व्याप्तेर्व्याप्यसर्वप्रपञ्चसापेक्षत्वात् । तस्यात्र सर्वपदेन कण्ठत उक्तेश्च । नात्र तस्य मिथ्यात्वमाघ्रातमपि । ईदृशस्य सविशेषस्येश्वरस्यैव तद्ब्रह्मेति ब्रह्मत्वोक्त्या ब्रह्मेश्वरभेदोपि निरस्त इत्यलम् । तस्मात्प्रथमोऽयमध्यायस्सर्वथा परपक्षप्रतिकूलोऽस्मत्पक्षानुकूलश्चेति सिद्धम् ॥ १४ ॥

अथास्यामेवाध्यायान्तरेषु प्रतिपादिताश्चिदचिदीश्वराणां स्वाभाविकभेदाः केचनोद्धृत्य प्रदर्श्यन्ते । 'तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोक' इति जीवपरभेदस्स्फुटं प्रतीयते । अनन्तरमेव 'यदात्मतत्त्वेन तु ब्रह्मतत्त्व' मिति ब्रह्मतत्त्वात्मतत्त्वे भिन्ने उपात्ते । 'सर्वान् लोकानीशत ईशनीभिः .... य एतद्विदुरमृतास्ते भवन्ती' ति जगन्नियमनसमर्थाभिर्ज्ञानबलक्रियाशक्तिभिस्सर्वान्लोकानीष्टे सर्वेश्वरः। एतज्ज्ञानाज्जीवा मुच्यन्त इत्युच्यते । 'द्यावाभूमी जनयन्देव एकः । यो देवानां प्रभवश्चोद्भवश्च विश्वाधिक' इति चेतनाचेतनात्मकप्रपञ्चजनकत्वं तस्मादधिकत्वञ्चोच्यते । यस्मात्परं नापरमस्ति किञ्चिदिति सर्वस्मात्परत्वं सविशेषस्य परमात्मन एवोच्यते, न निर्विशेषस्य । तस्यैव 'वृक्ष इव स्तब्धो

दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व' मिति सर्वजगद्व्यापकत्वोक्तेः । तेनेति परात्परस्यैव परामर्शात् । न हि निर्विशेषं जगद्व्यापीति वक्तुं शक्यम् ; जगद्रूपविशेषाभावात् । 'ततो यदुत्तरतरं तदरूपमनामय' मित्यनन्तरोक्तमपि न सविशेषात्परस्य कस्यचिन्निर्विशेषस्य सत्तां प्रतिपादयितुमलम् ; 'य एतद्विदुरमृतास्ते भवन्ती' त्युत्तरतरस्यैव वेदनविषयत्वोक्तेः । न हि शुद्धं ज्ञानविषयस्तन्मते । तथासति घटादिवज्जडत्वप्रसङ्गात् । सर्वोत्कृष्टत्वेन पूर्वनिरूपितस्य परमात्मन एव, 'सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः । सर्वव्यापी स भगवान्' 'सदा जनानां हृदये सन्निविष्टः' 'सर्वस्य प्रभुमीशानम्' 'वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च' त्यादिभिरुपरितनैर्वाक्यैर्बहुप्रकारविशेषवत्त्वप्रतिपादनाच्च । नच वाच्यमेभिरर्वाचीनं ब्रह्मैव प्रतिपाद्यत इति — सर्वोत्कृष्टवस्तुप्रतिपादनानन्तरं ततो निकृष्टस्य वस्तुनः पुनः पुनः प्रतिपादनासङ्गतेः । अतोऽत्र प्रकरणे एकमेव सर्वोत्कृष्टं वस्तु सत्यबहुविशेषवत् प्रतिपाद्यत इति । एवं 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति प्रकृतिः बद्धो मुक्तश्च परस्परभिन्नतया प्रतिपाद्यन्ते । अत्राजायास्स्वसरूपानेकपदार्थस्रष्टृत्वोक्त्या तस्या नाऽविद्यारूपत्वं शङ्कितुमप्यर्हम् । न हि शुक्तिरजतादिकं स्वसमानानेकपदार्थस्राष्टृत्युपपद्यते, कुत्रापि केनापि व्यवह्रियते वा । नच वाच्यमविद्याया दोषरूपत्वाभ्युपगमात् , दोषस्यचानेकपदार्थसर्गहेतुत्वसंभवाद्दृष्टान्तवैघट्यमिति- दोषत्वेपि मिथ्यात्वाभ्युपगमेन तदविशेषात् । दोषस्य तद्धेतुत्वेपि स्वसरूपकार्यजनकत्वाभावेन 'सरूपाः प्रजाः' इत्यस्यासङ्गतत्वाच्च । न हि तिमिरादिदोषसारूप्यं द्विचन्द्रादीनाम् ; व्यावहारिकप्रतिभासिकसत्ताभेदाच्च । अतस्सर्वात्मता अजापदन्नाविद्यापरम् ; अपितु परिदृश्यमानसत्यात्मकप्रपञ्चकारणभूतसत्यात्मकसूक्ष्मवस्तुविशेषपरमेव; मृद्घटादिस्थलानुरोधात् । नन्वत्रैवोपरि- 'अस्मान्मायी सृजते', 'मायया सन्निरुद्धः', 'मायान्तु प्रकृतिं विद्यात्' इति

मायाशब्दप्रयोगात्तस्य च मिथ्याशब्दपर्यायत्वादविद्यैव जगत्कारणं प्रतीयत इति चेन्न – मायाशब्दस्य विचित्रार्थसर्गकरत्वं निमित्तीकृत्य सत्यार्थेपि प्रयोगात् । तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षता देहमैकैकश्येन सूदितम्' 'ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मणीसुतः । क्षणेन नाशयामास नैशं तम इवोष्णगु' रित्यादौ सत्येष्वेव ह्यस्त्रादिषु मायाशब्दः प्रयुज्यते; मिथ्यार्थस्य शस्त्रनाश्यत्वासम्भवात । ज्ञानबाध्यं हि तन्मतम् । किञ्चात्र मायामायिनावनूद्य तयोः प्रकृतित्वमहेश्वरत्वे एव विधीयेते; 'मायान्तु प्रकृतिं विद्या' दिति हि वचनशैली, 'अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया सन्निरुद्ध' इत्युक्तौ मायामायिनौ काविति जिज्ञासानुरोधाच्च । ततश्च मायाशब्दस्य मिथ्यापर्यायत्वं दूरापास्तमिति ॥

तदनन्तमेव 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति ॥ समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्याचिज्जीवेश्वराणां स्वाभाविको भेदस्स्फुटतरमुक्तः ॥

एवं 'द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याऽविद्ये निहिते यत्र गूढे । क्षरन्त्वविद्या ह्यमृतन्तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः' इति पञ्चमोपक्रमे नित्यानित्यफलसाधनज्ञानकर्मवान् जीवोऽन्यः, ज्ञानकर्मप्रवर्तकस्तदाराध्यश्चेश्वरोऽन्य इति जीवेश्वरभेदः प्रस्पष्टमुक्तः । एतद्विवरणरूप एव सम्पूर्णोऽध्यायः । तथा हि – यो योनिमित्यारभ्य विनियोजयेद्य इत्यन्तेन सर्वकारणभूतः परमात्मा प्रतिपादितः । तद्वेदेत्यादिना केषाञ्चिज्जीवानां यथावस्थितब्रह्मज्ञानं तत्फलभूतमुक्तिश्चोक्ते । अथ गुणान्वयोय इत्यादिना जीवस्वरूपं सम्यग्विशोधितम् । तत्र विश्वरूप इति कर्मानुगुणनानादेहवत्त्वं, त्रिवर्त्मेति देवयान – पितृयाण – संयमिनीरूपमार्गत्रयसम्बन्धार्हत्वोक्त्या पितृयाणप्राप्तिहेतुभूतपुण्यकर्मवत्त्वं तत्प्रयोज्यानित्यस्वर्गादिभोगवत्त्वञ्चोक्तम् । अन्ते अनाद्यनन्तमित्यादिनेदृशदेहसम्बन्धादिरूपबन्धनिवृत्तिः, विश्वस्रष्टृत्वाद्यनेककल्याणगुणगणविशि-

ष्टपरमात्मज्ञानेनैवेत्युच्यते इति ।

एवं षष्ठेपि 'तमीश्वराणां परमं महेश्वरम्' 'न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । न तस्य कश्चित्पतिरस्ति लोके नचेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः' इति सर्वोत्कृष्टस्वाभाविकज्ञानबलक्रियाशक्त्यादिविशिष्टस्सर्वकारणभूतः परमात्मा, स एव जीवानामधिपः, तस्य जनकस्स्वामी वा, केनापि प्रकारेण तस्मादधिको वा न कोप्यस्तीति स्फुटतरमुच्यते । एवं स्थिते, 'गुणविशिष्टात्माऽवरात्मा; गुणवर्गश्चाऽऽविद्यकः, अत एवाऽस्वाभाविकः; अयमेवात्मा ईश्वरादिपदवाच्यः; अस्मादधिकं सर्वविशेषरहितं प्रत्यगभिन्नं शुद्धचैतन्यस्वरूपमेव परं ब्रह्म; तच्च न केनापि पदेन बोध्यते, न ज्ञानविषयश्च तत्' इतीदृशं परमतमौपनिषदमनौपनिषदं वेति विद्वांस एव विचारयन्तु ॥

'यदात्मतत्त्वेन तु ब्रह्मतत्त्व' मित्यत्र यत्परेषां विवरणं 'परमात्माऽऽत्मानमात्मनैव जानीया' दिति–न तत्परानुकूलम्, अस्मत्प्रतिकूलं वा, जीवपयोरभेदाप्रतीतेः। 'अहं ब्रह्मास्मी' ति वेदनप्रकारविवरणन्तु हेयम्, 'आत्मतत्त्वेन ब्रह्मतत्त्व' मिति प्रतीयमानभेदविरोधात् । ब्रह्मतत्त्वदर्शनसाधनत्वं हि जीवतत्त्वस्य प्रतीयते; न दर्शनस्य जीवब्रह्माभेदविषयकत्वम् । आत्मतत्त्वत्वेनेति हि तदा भाव्यम्; विवृतश्च स्वेनैवावशात् । 'आत्मनैव जानीया' दिति 'आत्मतत्त्वेने' ति जीवात्मनस्तत्त्वरूपत्वोक्त्या तस्याऽतत्त्वरूपत्वं निरस्तं भवति । अध्यस्तस्य मिथ्याभूतस्य तत्त्वपदेनोपादानायोगात् । 'भोग्यभोक्तृनियन्तृलक्षणं त्रयं रज्वामिव सर्पो ब्रह्मण्यध्यस्त' मिति हि तस्मिंस्त्रयं सुप्रतिष्ठा इत्यत्रोक्तं भवतेति । यदपि 'यस्मात्परं नापर' मित्यादेर्व्याख्यानं 'यस्मात्पुरुषात्परमुत्कृष्टमपरमन्यन्नास्ति, तेनाद्वितीयेन परमात्मना इदं सर्वं पूर्णं – नैरन्तर्येण व्याप्तं पुरुषेण–पूर्णने' ति – इदं मिथोव्याहतं स्वमतविरुद्धश्च । 'यस्मा' दित्यादिना निर्विशेषमेवोच्यत इति भवता वक्तव्यम्; सविशेषस्य निर्विशेषाद-

परस्य सर्वस्मात्परत्वायोगात्, तदज्ञानस्य मोक्षहेतुत्वानुपगमेन 'कस्मात्पुनस्तमेव विदित्वाऽतिमृत्युमेतीत्युच्यत ' इति यस्मादित्यादेरवतरणदानासङ्गतेश्च । इत्थञ्च तस्य सर्वव्यापकत्वकथनमनुपपन्नं, निर्विशेषत्वदशायां व्याप्याभावेन व्याप्त्यसम्भवात् । शुद्धचैतन्यरूपस्य तस्य पुरुषपदवाच्यत्वमप्यसंभवि । पुरुषपदं हि 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ' इति सर्वकारणत्वसर्वपापदाहकत्वरूपधर्मद्वयविशिष्टपरतया बृहदारण्यके निरुच्यते । 'पुरुसंज्ञे शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य षकारोऽय व्यत्ययेन प्रयुज्यते । स्त्रीप्रायमितरत्सर्वं जगत्स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् । ब्रह्माद्यास्सकला देवा यक्षगन्धर्वकिन्नराः । ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति 'इत्यादि स्मर्यते । अत्र 'पुरु शेत' इति व्युत्पत्तिरभिमेता । 'भगवानिति शब्दोऽयं तथा पुरुषइत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने 'इति वचनान्तरम् । अत्र वासुदेवे पुरुषशब्दो वर्तत इत्युक्त्या वासुदेवशब्दवत्पुरुषशब्दस्यापि सर्वव्यापकत्वसर्वाधारत्वविशिष्टपरत्वमुक्तं भवति । 'सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते 'इति हि तन्निर्वचनम् । तस्मात्पुरुषशब्दस्सर्वोत्कृष्टत्वसर्वपापदाहकत्वाद्यनेकाकारविशिष्टपर एवेति तत्पदप्रतिपाद्यत्वं भवदभिमतशुद्धचैतन्यस्यासंभावितमेव । तस्य ज्ञानविषयत्वानुपगमेन तदज्ञानान्मुक्तिकथनासङ्गतिश्चेति ।

यदपि 'ततो यदुत्तरतर' मित्यादेर्विवरणं 'ततः — इदं शब्दवाच्याज्जगत उत्तरं कारणं, ततोऽप्युत्तरं कार्यकारणविनिर्मुक्तं ब्रह्म तदरूपं — रूपादिरहित ' मित्यादि — तदप्यसङ्गतं, पूर्वं तदपेक्षयोत्कृष्टं वस्तु किञ्चिदपि नास्तीति 'यस्मात्परं नापरमस्ति किञ्चि' दिति स्वयमेव कण्ठतो निषिध्य, अनुपदमेव 'ततो यदुत्तरतर' मिति तस्मादुत्कृष्टस्य कस्यचित्सत्तां प्रतिपादयतीत्यस्य व्याहतत्वात् । रूपामयादिराहित्यस्य विशेषस्य निर्विशेषेऽसंभवाच्च । अस्य वाक्यस्य निर्विशेषपरत्वे दूषणान्तराण्यप्युक्तानि । ततश्च यदुत्तरतरं तत्त्वं 'यस्मात्परं

नापर' मित्यत्र प्रतिपादितं, तत् यतोऽरूपमनामयश्च ततः तद्ज्ञानवन्त एव मुच्यन्त इत्ययमेवार्थः प्रकरणानुगुणः प्रमाणान्तरानुगुणो दोषलेशविधुरश्चेति ध्येयम् । यदपि 'द्वा सुपर्णा' इत्यादेर्व्याख्यानं 'परमार्थवस्त्ववधारणार्थं जीवेश्वरावत्र प्रतिपाद्येते' इति । तदपीश्वरापेक्षया निर्विशेषवस्तुनिरासादेव निरस्तम् । वचनशैल्या जीवेश्वरप्रतिपादनस्य स्वातन्त्र्येण प्रतीयमानस्य स्थूलारुन्धतीशाखाचन्द्रादिन्यायेन निर्विशेषनिश्चयशेषत्ववर्णनस्यातिसाहसिकत्वाच्च । एतदनन्तरं, इतःपूर्वं वा नानाविधविशेषविशिष्टस्यैव प्रतीत्या लेशतोऽपि निर्विशेषप्रतीतेरनुदयाच्च । पूर्वमन्त्रे अन्यशब्दोक्तस्यैवोत्तरमन्त्रस्थान्यशब्दप्रतिपाद्यत्वस्य स्वारस्यादिसिद्धत्वेन तस्येश्वरत्वे तद्ज्ञानाच्छोकनिवृत्त्युक्तेरसांगत्यञ्च । नहीश्वरज्ञानाच्छोकनिवृत्तिरुपपद्यते, तस्याध्यस्तत्वात्सविशेषत्वाच्च । यदि ईश्वरज्ञानाच्छोको निवर्तते, तदा जीवज्ञानादपि स निवर्ततैव, वस्तुतो ब्रह्माभेदस्योभयोरप्यविशिष्टत्वात् नियन्तृत्वादिवैषम्यस्याकिञ्चित्करत्वादिति ॥

यत्तु 'अनाद्यनन्त' मिति मन्त्रे 'विश्वस्यैकं परिवेष्टितार' मित्यस्य व्याख्यानं 'स्वात्मना व्याप्याऽवस्थित' मिति, तद्व्याख्येयविरुद्धं, मूले विश्वस्य व्याप्यत्वं परमात्मनो व्यापकत्वञ्च हि स्फुटं प्रतीयते, न तु स्वस्यैव व्याप्यत्वव्यापकत्वे । विश्वपरिवेष्टितृपदयोरत्यन्तभिन्नार्थकत्वात् व्याप्यत्वव्यापकत्वयोरेकनिष्ठत्वासम्भवाच्च । नह्यतिपटुरपि नटवटुस्स्वस्कन्धमारुह्य नृत्यतीति न्यायादिति । एवं 'भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनु' मित्यनन्तर मन्त्रस्य यद्विवरणं 'भावाभावकरं शिवं शुद्धमविद्यातत्कार्यविनिर्मुक्तं प्राणादिनामान्ताथर्वणोक्तषोडशकलासर्गकरं, देवं 'अहमस्मी' ति ये विदुस्ते शरीरं परित्यजेयु' रिति — तदपि व्याहतिदुष्टम् । अविद्यातत्कार्यविनिर्मुक्तस्य कलासर्गकरत्वायोगात् । अत्र शुद्धस्य प्रतिपिपादयिषितत्वे, भावग्राह्यत्वभावाभावकरत्वकलासर्गकरत्वोक्ति-

विरोधः। अशुद्धस्य तथात्वे तद्ज्ञानेन मुक्तिपर्यवसायिशरीरत्यागकथन-विरोध इति । अत्र 'जहुस्तनु' मित्युक्तया जीवन्मुक्तिर्निरस्तेति वेदितव्यम् । यत्त्ववतरणं 'तमीश्वराणा' मित्यदेः 'विद्वदनुभव दर्शयन्नुक्तमर्थं दढीकारोती' ति, तत्तन्मतेऽसङ्गतं, निर्विशेषानुभवस्यैव विद्वदनुभवरूपतया महेश्वरत्वादिविशिष्टानुभवस्याविद्वदनुभवरूपताया एव युक्तत्वात् । 'तत्त्वमस्या' दिवाक्यजन्यो निर्विशेषात्मैक्यसाक्षात्कारो विदुषो जायमानो मुक्तिहेतुः ; अर्वाचीनसगुणब्रह्मज्ञानमर्वाचीनफलसाधनमिति हि तदभिमतो विवेकः । 'विद्वदनुभव' मित्यत्र विद्वत्पदञ्च मुक्तिहेतुभूतज्ञानप्रतिपादनप्रकरणानुगुण्यान्मुख्यविद्वत्परमेव तदभिमतमिति । 'न तस्य कार्य' मित्यादिकमप्यस्माभिरिव परैरपि विविधविशेषविशिष्टब्रह्मपरतयैव व्याख्यातम् । तथासति 'न तत्समश्चाभ्यधिकश्च दृश्यत' इत्येतद्विरुध्यत इति तु न मनागपि चिन्तितं तैः । मध्ये स्वासिद्धान्तं स्मृत्वा, 'स्वेनैव स्वं व्याप्यस्थितं, अविद्यातत्कार्यविनिर्मुक्त' मित्येवमपि हठाद्व्याख्यायते । किं बहुना; ईदृशक्लेशस्तावत्परैस्सर्वेष्वपि श्रुतिवाक्येषु स्मृतिवाक्येषु च सर्वात्मनाऽनुभाव्य एव । विनाऽस्मात्सिद्धान्तप्रवेशमस्य क्लेशस्य क्षयकरं दिव्यौषधं किमपि नास्त्येवेत्येतदपि नोपपादनीयं पक्षपतनरहितानामिति । यत्तत्रैव 'साक्षी चेता केवलो निर्गुणश्चे' त्युक्तं—तदपि न तन्मतानुकूलमिति द्वाविंशेऽधिकारे वक्ष्यते । अत्रैव किञ्चिदुपरि 'प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतु' रिति परमात्मनोऽचिज्जीवापेक्षया तत्पतित्वेन भेदः, जीवसंसारमोक्षहेतुत्वञ्च प्रस्पष्टमुच्यते । 'संसारमोक्षस्थितिबन्धहेतु' रित्युक्तम्, न तु स्थितिबन्धभागिति । ब्रह्मैव बध्यते, मुच्यतेचेति हि भवदुक्तिः। संसारतन्मोक्षभागन्यः, ताभ्यामस्पृष्टस्तद्धेतुभूतश्चान्य इत्येतदपि 'तत्र यः परमात्मा तु स नित्यो निर्गुणस्स्मृतः । स तु नारायणो ज्ञेयस्सर्वात्मा पुरुषो हि सः॥ न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा । कर्मात्मात्त्वपरो योऽसौ मोक्षबन्धैस्स युज्यत इत्याद्युपबृंहणशतसिद्धमित्यलम् । तस्मादियमुपनिषदपि मृषावाददाव-

दहनशमनी प्रावृषकादम्बिनीति सिद्धम् ॥ १५ ॥

एवमथर्वशिखोपनिषदपि, परमकारणभूतः परमात्मा स्वाभाविकसार्वज्ञ्यादिसकलकल्याणगुणविशिष्टो ध्यातॄणां सर्वशोकनिवारणसमर्थस्सर्वविधमङ्गळप्रदो नारायण एव ध्येयः, तापत्रयाक्रान्ता मोक्षकाङ्क्षिणो जीवा ध्यातारः, तादृशाधिकारिभिर्बन्धनिवृत्तये भगवद्ध्यानमेवावश्यकर्तव्यम्, देहादुत्क्रान्तस्य अप्राकृते देशविशेषे तादृशभगवत्प्राप्तिरेव मुक्तिः, जीवपरावत्यन्तभिन्नाविती ममर्थं प्रतिपादयन्ती एतद्विरुद्धान सर्वानपि पक्षान्निराकरोत्येव । तथाहि – उपक्रमे तावत् 'भगवन् किमादौ प्रयुक्तं ध्यानं, ध्यातव्यं, किन्तद्ध्यानं को वा ध्याता कश्च ध्येय 'इत्यनेन ध्यानकरणभूतो मन्त्रः कः, ध्यानं कीदृशं, कीदृशो ध्यानाधिकारी; को वा देवताविशेषो ध्येयः इति शिष्यैः प्रश्नः कृतः । तस्य च ओमित्येतदक्षरमित्यादौ प्रयुक्तं ध्यान मित्यादिना विस्तरेणोत्तरमुक्तमाचार्येण । तत्राकारोकारमकारनादरूपार्धमात्रात्मकानां प्रणवावयवानां चतुर्णां क्रमेण ब्रह्मविष्णुरुद्रपुरुषदेवताकत्वमुक्तम् । चतुर्थार्धमात्रायाः पुरुषदेवत्येत्यनेन देवतात्वेनोक्तः पुरुषो नारायण एव । 'भगवानिति शब्दोऽय' मित्यादिपूर्वोदाहृतपुरुषपदप्रतिपाद्यविशेषनिर्णायकप्रमाणानुरोधात् । स एवात्र चतुर्थश्शान्तात्मेत्युच्यते । शान्त आत्मा शान्तात्मा शान्तत्वमशनायाद्यूर्मिषट्करहितत्वम् । आत्मत्वम् आप्नोतीति व्युत्पत्त्या सर्वजगदन्तर्यामित्वम् । नन्वात्र शान्तत्वं सर्वविशेषराहित्यमिति मन्तव्यं । तथासति आत्मेत्यात्मत्वोक्तिविरोधात् । व्याप्तिः विना व्याप्यं न सम्भवतीति । पुरुषशब्दनिरोधाच्च । सर्वकारणत्वं सर्वपापदाहकत्वञ्च पुरुषपदप्रवृत्तिनिमित्तमिति बृहदारण्यकश्रुतिरित्युपपादितं पुरस्तादेव । पुरुषश्च शान्तात्माचैक एवेत्यपि प्रतिपत्तव्यम् । सर्वोत्कृष्टस्य तुरीयस्य प्रस्तावानन्तरं ततो निकृष्टप्रस्तावासाङ्गत्यात्, अव्यहितत्वाच्च । चतुर्थइति कण्ठोक्तेश्च । ओङ्कारादिनामनिर्वचनावसरे 'एष हि प्राणान्सकृदुच्चारितमात्र ऊर्ध्वमुन्नामयतीत्योङ्कार' इति श्रवणात्प्रण-

वस्योर्ध्वगतिप्रापकत्वावगमेन प्रकृतिमण्डलादूर्ध्वदेशं प्राप्तस्यैव मुक्तिरिति गम्यते । 'प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येतस्मात्प्रणव' इति निर्वचनाज्जीवपरभेदः प्रतीयते । 'एष हि प्राणान्', 'प्राणान् सर्वा' नित्युभयत्रापि 'ऊर्ध्वमुन्नामयति, परमात्मनि प्रणामयती' ति समभिव्याहृतपदार्थान्वयस्वारस्यात्प्राणसहचरितजीवपरत्वमेव युक्तम् । 'प्रणामयती' त्यस्य शेषतैकप्रवणान करोतीत्यर्थकत्वस्यैव युक्ततरत्वात्। जीवस्य परशेषत्वप्रतिपादकः प्रणव इति हि प्रमाणानुसारी सम्प्रदायः । 'देवांश्च समुद्धर्ता सर्वेभ्यो दुःखभयेभ्यस्सतारयतीति तारणात्तार' इति निरुक्त्या पूर्वं ऊर्ध्वमुन्नामयतीत्युक्तोर्ध्वलोकप्राप्तिस्साक्षान्मुक्तिरित्यवगम्यते । सर्वेभ्योपि दुःखेभ्यस्संतारणवचनात । 'सर्वे पाप्मानः', 'सर्वपापेभ्य' इत्यादिवत् । 'सर्वाणि ब्रह्मयतीति ब्रह्मे' ति निर्वचनेन पूर्वोक्ता मुक्तिस्स्वाभाविकज्ञानविकासरूपेत्यवगम्यते । ब्रह्मयति – बृहत्त्वविशिष्टानि करोति । बृहत्त्वञ्च न स्वरूपतः, अणुत्वात् । अपितु ज्ञानानन्दादिगुणैरेव । 'एषोऽणुरात्मा', 'आराग्रमात्रो ह्यवरोऽपि दृष्टः, वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेयस्स चानन्त्याय कल्पत' इत्यादिप्रमाणानुरोधात् ! अत्र ब्रह्मयतीत्युक्त्या सर्वेषां ब्रह्मभाव एवोक्तः प्रतीयत इति स एव मुक्तिस्स्यादिति चेन्न । पूर्वमेव ब्रह्मभूतानां बृंहयितृत्वायोगेनाब्रह्मभूतानि बृंहयतीत्येव वक्तव्यतया ब्रह्मयतीत्यस्य परंब्रह्मकरोतीत्यर्थकत्वासंभवात्। इत्थञ्चात्रापि जीवब्रह्मभेदसिद्धिर्निष्प्रत्यूहा; ध्यानसाध्यबृहत्त्वाश्रयस्वाभाविकबृहत्वाश्रययोरैक्यायोगात् ! एवं 'स्वयं ब्रह्म भवतीत्येष सिद्धिकर' इत्यत्रापि ब्रह्म भवतीत्यस्याविर्भूतगुणाष्टकतया ब्रह्मसमानो भवतीत्येवार्थः । प्रणवेन ब्रह्मध्यायीति शेषः । ब्रह्माभिन्नो भवतीति तु नार्थः; पूर्वमेव ब्रह्मभूतस्येदानीमपूर्वतया ब्रह्मभावविधानायोगात् । 'परमात्मात्मनोर्योग' इत्यादिनैक्यनिषेधात् । 'तादृगेव भवति', 'परमं साम्यमुपैती' त्यादिना मुक्तावपि भेदोक्तेश्च । 'ब्रह्म भवती' त्यस्य निवृत्ताविद्यो भवति, निवृत्ताब्रह्मत्वभ्रमो भवतीत्याद्यर्थोपि

लाक्षणिक एव । प्रमाणन्तरविरुद्धत्वमधिकम् । 'एतस्माद्ध्यानादौ प्रयुज्यत' इति प्रथमप्रश्नस्योत्तरम् । ध्यानकरणभूतो मन्त्रः प्रणव इति तात्पर्यम् । ध्यानं विष्णुरित्यस्य भगवद्ध्यानं सर्वैर्मुमुक्षुभिर्नैरन्तर्येण कर्तव्यमित्यर्थः । विशन्ति निष्ठां कुर्वन्त्यस्मिन्मुमुक्षव इति ध्यानं विष्णुरुच्यते । अनन्तरं ध्याता रुद्र इति संसारमहाभयाक्रान्तस्तन्निवृत्तये भगवतोऽत्युत्कटकृपापादकरोदनदन्तपङ्क्तिप्रदर्शनादिकर्ता रुद्रवदत्यन्तशोकाविष्टो भगवद्ध्यानाधिकार्युच्यते । ब्रह्मरुद्रयोर्ध्यातृत्वमप्युपर्युच्यते ध्याता ब्रह्मा ध्याता रुद्र इति । इत्थञ्चेदं तृतीयप्रश्नोत्तरम् । अथ 'प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्ये'त्यनेन जीवपरभेदस्स्फुटमुच्यते । अत्र करणैरिति जीवोपकरणानां सर्वेषामप्यविशेषेणोक्तत्वात्तदुपकरणिभूतः प्राणसहचरितो जीव एव प्राणं मनसीत्यत्र प्राणशब्देनोच्यते । 'ध्यायीत ज्ञानं प्रध्यायितव्य' मिति चतुर्थस्योत्तरमुच्यते । सर्वेश्वरेश्वरो भगवान्नारायण एव मुमुक्षुभिर्ध्येयः, तापत्रयात्यन्तानिवृत्त्यौपयिकसर्वाकारविशिष्टत्वात् । अतस्तमेव ध्यायीतेति तदर्थः । नारायणस्यैव प्रकर्षेण ध्येयत्वे हेतुरुच्यते 'सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्त' इति । अत्र संप्रसूयन्त इतीदं कर्ममूलप्रसवाश्रयब्रह्मादि – तदनाश्रयविष्णुघटितसमुदाये छत्रिन्यायाल्लाक्षणिकम् । ततस्त्वमपि दुर्धर्षात्तस्माद्भावात्सनातनात् । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवानित्यादिप्रमाणेन भगवतो नारायणस्यैव विष्णुरूपेण स्वेच्छयाऽवतार इति प्रतिपादनात्तस्य कर्ममूलोत्पत्त्ययोगात् । एवञ्च विष्णोरत्रोपादानं विष्णुत्वेन भगवतः परमकारणत्वाभावज्ञापनायेति मन्तव्यम् । यद्वा संप्रसूयन्त इत्युक्ता संप्रसूतिः कर्मकृतस्वेच्छाकृतोत्पत्तिसामान्यरूपैव । ततः 'न कारणं कारणानां .... ब्रह्मा कारणभूतोपि ध्याता रुद्र 'इत्यनेन कतिपयकारणभूतयोरपि चतुर्मुखरुद्रयोस्सर्वकारणत्वरूपं परमकारणत्वं कण्ठतो निषिध्यते । अत्र प्रणवमात्रादेवतात्वेनोक्तेषु ब्रह्मविष्णुरुद्रपुरुषरूपेषु चतुर्षु द्वयोरेव चतुर्मुखरुद्रयोः परमकारणत्वनिषेधादवशिष्टयोरप्यैक्यं, तत

एव तयोः परमकारणत्वं इतरयोः क्षेत्रज्ञान्तर्भावात्तदुभयाभावश्च गम्यते । ईशानं ध्यायीतेत्युक्तमेव विवृणोति – 'कारणन्तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये ध्येय' इति । चेतनाचेतनात्मकसर्वप्रपञ्चकारणभूतस्सर्वेश्वरस्सर्वनियन्ता, सर्वविधैनैश्वर्येण शेषित्वेन सम्पन्नः, परममङ्गळरूपमोक्षप्रदो भगवानेव दहरविद्योक्तरीत्या हृदयाकाशमध्ये ध्येय इत्यर्थः । अत्र शम्भुशब्दः शं भवत्यस्मादिति व्युत्पत्त्या मोक्षप्रदं भगवन्तमाचष्टे। स्वयंभूश्शम्भुरादित्य इति भगवन्नामसु शम्भुशब्दःपठ्यते । 'इति नारायणश्शम्भुर्भगवान् जगतां पतिः । संदिश्य विबुधान् सर्वानजायत यदोः कुले' इति च वचनान्तरम् । नह्युमापतिः कृष्णरूपेणाववतारेति कोऽप्यनुमन्यते । 'नारायण' इत्युक्तिविरोधः; प्रकरणविरोधश्च । एवं 'शिव एको ध्येयश्शङ्करस्सर्वमन्यत्परित्यज्ये' त्येतदपि भगवत्परमेव । पुरुषशब्दितस्य तुरीयार्धमात्रादैवतस्यैवात्रानुवृत्तेः । 'नादान्ते परमात्मनी' त्युक्त्या परमात्मशब्दितः पुरुष एव । स एव 'ध्यायीत ईशान मित्युच्यते। स एव तु कारणन्तु ध्येय इत्यत्र प्रतिपाद्यत इति । ततश्च शङ्करः मोक्षरूपसुखप्रदः, शिवः – परममङ्गळास्पदभूतो नारायण एव ध्येय इत्यर्थः । अत्र, किं ध्यानकरणं, को वा ध्यातेति ध्यानकरणादिविशेषप्रश्ने, ध्यानकरण – ध्यानक्रिया – ध्यानाधिकारि – ध्येयदेवता सामान्यज्ञानवता शिष्येण कृते, परस्परभिन्नतादृशार्थचतुष्टयमभ्युपगम्य तत्तद्विशेषकथनरूपमुत्तरमाचार्यस्यासङ्गतमेव स्यात्परमते । अज्ञन तथा प्रश्नेपि किं वा ध्यानकरणादिकं, सर्वं मिथ्या प्रत्यगभिन्नं निर्विशेषं ब्रह्मैकमेव सत्यम्' इति खलूपदेष्टव्यं तत्त्वविदेत्यलम् अत इयमप्युपनिषत्सर्वतोमुखं चिदचिदीश्वरतत्त्वत्रयभेदं प्रतिपादयतीति सिद्धम् ॥ १६ ॥

मन्त्रिकोपनिषदपि चिदचिदीश्वरभेदवादे दृढव्रतैवोपलभ्यते । तत्र हि प्रथमत एव अष्टपादं शुचिं हंस मित्यादिना अचेतनजीवविलक्षणत्वेन परमात्मा प्रतिपादितः । क्रमेण नित्याविर्भूतगुणाष्टकविशिष्टत्वनिरवद्यत्व सदसद्विवेचनरूपसर्वज्ञत्व जगत्सृष्टिस्थितिसंहारकर्तृत्वानिर-

तिशयसूक्ष्मत्व निर्विकारत्व तत्तत्कर्मब्रह्मज्ञानफलानुभवदेशप्राप्तिहेतुभूतत्रिविधमार्गप्रदत्वासुरस्वभावाविषयकस्वयाथात्म्यज्ञानाऽऽवारकत्वसर्वव्याप्तत्वानां परमात्मासाधारणधर्माणां प्रतिपादनात् । अनन्तरमेव 'भूतसम्मोहन' इत्यादिना तादृशं परमात्मानं तमोगुणनाशे सति केवल सत्त्वस्थास्साक्षात्कुर्वन्तीत्युक्तम् । अत्र निर्गुणं गुणगह्वरे त्यस्य त्रिगुणपरिणामतत्तच्छरीरसम्बन्धिगुहान्तर्वर्तित्वेऽपि गुणसङ्गकृतदोषशून्यमित्यर्थः; स तेऽन्तर्याम्यमृत इत्याद्यनुरोधात् । ननु 'प्रथममन्त्रेण राजसतामसानामविद्योपहितस्य ब्रह्मणो नानारूपत्वेन दर्शनमुच्यते । द्वितीयेन तु सत्त्वस्थानां तस्य निर्विशेषत्वेन दर्शनमुच्यते इत्येव स्वरसतः प्रतीयते। उत्तरत्र, सत्त्वस्थाः निर्गुणमिति कर्तृकर्मविशेषणोक्ते' रिति चेन्न – तथासति शुचित्वोक्तिविरोधात् । शुद्धमशुद्धमिति ब्रह्मद्वैविध्यस्य निष्प्रमाणत्वाच्च । अनन्तरं 'विकारजननीमज्ञां' ध्यायतेऽध्यासिता तेन', 'गौरनाद्यन्तवती' त्यैतैस्तमःप्रधानादिपदवाच्या जगद्वृक्षबीजस्थानापन्ना त्रिगुणात्मिका प्रकृतिरुक्ता । अनन्तरं 'पिबन्त्येनामविषमामविज्ञाताः कुमारका' इति प्रकृति परवशा बहवो जीवात्मान उक्ताः । विज्ञातं विशिष्टज्ञानं देहात्मविवेकरूपं न विद्यते येषां तेऽविज्ञाताः । अत एव कुमारकाः बालप्रायाः देहात्मभ्रमवन्तस्तदनुगुणं कर्म कुर्वन्तः प्राकृतभोगजातं तत्फलमनुभवन्तीत्यर्थः । अनन्तरं 'एकस्तु पिबते देवस्स्वच्छन्दोऽत्र वशानुगाम् ! ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभु' रिति परमात्मनो जीववत्प्रकृति सम्बधवत्त्वेप्यत्यन्तवैलक्षण्यमुक्तम् । एकस्त्विति तुशब्देन परमात्मनो वैलक्षण्यमुच्यते । क्रीडनप्रवृत्तस्स्वतन्त्रो भगवान् सर्वात्मना स्वपरतन्त्रां प्रकृतिं 'तदैक्षत बहुस्यां प्रजायेय, तत्तेजोऽसृजत' त्युक्तसङ्कल्पविशेषसर्गादिरूपव्यापारविशिष्टस्सन्ननुभवति । तत्परिणामकृतलीलारसं भुङ्क्त इत्यर्थः । एतदेवानन्तरमप्युच्यते – 'पश्यन्त्यस्यां महात्मानस्सुपर्णं पिप्पलाशनम् । उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो जगु' रिति । सुपर्णं पिप्पलाशनमिति जीव उच्यते । उदासीनं ध्रुवं हंसमिति परः । अत्र जीवसम्ब-

न्धिनां ज्ञानानन्दादिकमनीयगुणानां 'सुपर्ण' मिति पक्षत्वेन रूपणम् । 'द्वा सुपर्णा .... तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्य' इति द्विवचनान्यशब्दद्वयघटितं वचनान्तरमत्र स्मर्तव्यम् । एवं प्रथमखण्डेन तत्त्वत्रयभेदस्सर्वतोमुख उक्तः ।

द्वितीयेन चेतनाचेतनप्रपञ्चस्य परमात्मापृथक्सिद्धप्रकारत्वेन तदात्मकत्वं तदिच्छाधीनस्वरूपस्थितिप्रवृत्तिकत्वात्मकतत्पारतन्त्र्यरूपं, परमात्मनोऽन्तः प्रविश्य नियन्तृत्वरूपं तच्छरीरित्वञ्चोच्यते । तेन प्रथमखण्डे त्रयाणामत्यन्तभेदप्रतिपादनाधीना परमात्मन इव प्रकृतिपुरुषयोरपि स्वतन्त्रत्वस्वनिष्ठत्वादिशङ्का निरस्यते । तथा स्वच्छन्दः, वशानुगामिति पूर्वोक्ते स्वातन्त्र्यपारतन्त्र्ये राजभृत्यवैलक्षण्येन सार्वकालिकसर्वप्रकारस्वातन्त्र्यपारतन्त्र्यरूपे शरीरिशरीरभावात्मके इति च विव्रियेते । तत्रादौ स ब्रह्मचारिवृत्तिश्चेत्यादिना ब्रह्मचारिवृत्त्यादिस्स परमात्मैवेत्युच्यते । अत्र ब्रह्मचारिवृत्त्यादिपदानां स इत्यस्य च सामानाधिकरण्यं शरीरात्मभावनिबन्धनं, न स्वरूपैक्यनिबन्धनं, न वा बाधार्थम्, असम्भवात्; पूर्वोत्तरविरोधाच्च । पठ्यते बहुविस्तर इति – बहुविस्तरे शास्त्रे अन्यदपि यत्पठ्यते – प्रतिपाद्यते तदपि स इत्यर्थः । यद्वा ब्रह्मचारिवृत्त्यादयो यैः पठ्यन्ते ते सर्वेपि स एवेत्यर्थः । अथवा शास्त्रे ब्रह्मचारिवृत्त्यादयो ये पठ्यन्ते सर्वेपि स एवेत्यर्थः । अनन्तरं श्रूयते – 'तं षड्विंशकमित्येके सप्तविंशमथापरे । पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदु' रिति । अस्यार्थः, सत्त्वरजस्तमोगुणातीतं तं परमात्मानं षड्विंश इति, एके–कालतत्त्वस्य सर्वपदार्थविशेषणैकस्वरूपतया पार्थक्यमनिच्छन्तो विदुः । तत्पार्थक्यमिच्छन्तोऽपरे तं परमात्मानं सप्तविंशं विदुः । सांख्यं — बुद्ध्याऽवधारणीयमिति । षड्विंशकमितीत्यत्र निपातेनोक्तत्वेपि च्छान्दसत्वात् द्वितीया । एवमनेन प्रकृतिप्राकृतानि चतुर्विंशतिरचेतनतत्त्वानि कालतत्त्वमेकं सामान्यतो जीवतत्त्वमेकं, परमात्मा चेति तत्त्वभेदाः दर्शिताः । अथ 'चतुर्विंशतिसंख्याकमव्यक्तं व्यक्तमुच्यते'

इति पूर्वोक्तस्य व्यक्ताव्यक्तरूपप्रकृतिप्राकृततत्त्वजातस्य परमात्मशरीरत्वमुच्यते । अत्र प्रथममन्त्रस्थस्य स इत्यस्यानुषङ्गः । चतुर्विंशतिसंख्याकं स इति सामानाधिकरण्यं पूर्ववत् । परमात्मशरीरत्वमेवात्र प्रतिपाद्यं, न तु तत्त्वसंख्याविशेषः, तस्य षड्विंशकमित्यादिनैव प्राप्तत्वात् । उपरि, 'अद्वैतं द्वैतमित्याहुस्त्रिधा तं पञ्चसप्तधा' इत्युच्यते । द्वयोर्भावो द्विता, द्वितैव द्वैतं, न द्वैतमद्वैतं; चिदचिच्छरीरकपरमात्मन एकत्वात्, चिदचितोश्च प्रकारत्वेनाप्राधान्यात्तत्त्वैक्यमेव काश्चिच्छ्रुतयो व्यवहरन्ति । अन्यास्तु 'ईशा वास्य' मित्यादयः स्वतन्त्रपरतन्त्रभेदविवक्षया तत्त्वद्वित्वम् । इतरास्तु भोक्ता भोग्यमित्यादयः भोक्तृभोग्यप्रेरयितृभेदं पुरस्कृत्य तत्त्वत्रित्वम् । व्यक्ताव्यक्तकालजीवेश्वररूपेण तत्त्वपाञ्चविध्यमन्याः । त्रिविधचेतनाचेतनेश्वरभेदेन वा अद्रव्यकालप्रकृतिनित्यविभूतिधर्मभूतज्ञानजीवेश्वरभेदेन वा सप्तविधत्वमपराः ।

अनन्तरं 'ब्रह्माद्यं स्थावरान्तञ्च पश्यन्ति ज्ञानचक्षुषः । तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजा' इति । अस्यार्थः, तत्त्वज्ञाः ब्रह्मादिस्थावरान्तं सर्वं जगत्पश्यन्ति – जानन्त्येव । तत्त्वज्ञानदशायामपि प्रपञ्चं जानन्त्येव । अतस्तत्सत्यमेवेति भावः । कथं तर्हि ऐक्यदर्शनं तत्रतत्रोच्यत इत्यत्राह – तमेकमेवेति । सोपबृंहणसर्ववेदवेदान्तविदो द्विजाः परमात्मानं सर्वव्यापकं ब्रह्मादिशरीरकं तथापि तत्तद्गततत्तद्दोषरहितं तमेकमेव पश्यन्तीति । परमात्मनोऽन्तर्यामितया जगद्व्यापित्वनिबन्धनं प्रपञ्चपरमात्मनोरैक्यमिति भावः । तत्त्वविदो जगत्पश्यन्ति, अथापि ब्रह्मैकमेव पश्यन्तीत्युक्तौ, विरोधपरिहाराय प्रमाणान्तरैककण्ठ्यसिद्धये च ब्रह्मापृथक्सिद्धप्रकारतया पश्यन्ति, स्वनिष्ठतया न पश्यन्तीत्यर्थ एव वाच्य इति । ननु अद्वैतमेव तत्त्वं, बहवो बहुधा भेदं वर्णयन्ति । ज्ञानचक्षुषस्तु सर्वं जगत् परमात्मानमेकमेव पश्यन्ति, तद्व्यतिरिक्तं जगत्स्वरूपेण न पश्यन्तीत्येव अद्वैतमित्यादेरर्थ इति चेन्न, भेदप्रतिपादकपूर्वोत्तरविरोधात् । 'त्रिधा, पञ्चधा सप्तधा' इति विस्तरवैयर्थ्यात् । पश्यन्ती-

त्यस्यैकस्यानन्वयाच्च। तथा योजनायामपि जगद्बाधासिद्धेश्च ! विद्यमानयोर्द्वयोर्जगद्ब्रह्मणोरैक्यस्यैव तेन प्रतीतेः ! प्रतीयमानमैक्यं यत्र बाधितं तत्र लक्षणादिकमप्याश्रयणीयम् । अत्र तु बाधगन्धोपि नास्तीति शतशः प्रतिपादितम् । हेतूपन्यासपूर्वकं च श्रुत्यैव तत्प्रतिपाद्यते । 'तज्जला' निति हि श्रुतिरिति ।

अत्राप्युक्ततादात्म्यहेतुरेवोच्यते 'यस्मिन्सर्वमिदं प्रोतं ब्रह्म स्थावरजङ्गमम् । तस्मिन्नेव लयं याति स्रवन्त्यस्सागरे यथा । यस्मिन्भावाः प्रलीयन्ते लीनाश्चा व्यक्ततां ययुः । पश्यन्ति व्यक्ततां भूयो जायन्ते बुद्बुदा इव' इति । ब्रह्मेत्येतल्लुप्तसप्तम्यन्तम् । यस्मिन्ब्रह्माणि प्रोतं, अन्तर्यामिणा येन व्याप्तमिति यावत् । यद्वा ब्रह्मपदं परिशुद्धजीवस्वरूपपरम् । अव्यक्ततां ययुः– अविभक्ततमोवस्था भवन्ति। पुनर्जलाद्बुद्बुदा इव परमात्मनि पूर्वलीनाः पदार्थाः तस्माज्जायन्ते,तत एव व्यक्तत्वञ्च यान्ति। तदिदं पश्यन्ति तत्त्वविदश्शास्त्रत इत्यर्थः। अत्र 'सागरे स्रवन्त्य इव लीयन्ते, जलाद्बुद्बुदा इव जायन्त' इत्युक्त्या जगद्ब्रह्मणोरुभयोरप्येकद्रव्यत्वं सत्यत्वञ्च सुदृढमवसीयते । अत्र लयविषये उत्पत्तिविषये च दृष्टान्तविशेषोपन्यासाच्छ्रुतेरादरातिशयोप्यत्र व्यज्यते ।

ईदृशव्यवहारेषु जगन्मिथ्यात्वं सर्वात्मना न सिद्ध्येदित्यंशः पूर्वं छान्दोग्याधिकारे सम्यगुपपादितः। अत्रापि स्वरूपशोधनेन पुनर्ज्ञाप्यते। नदीजलस्य समुद्रे लयो नाम– प्रवाहत्वरूपस्वावस्थाविशेषप्रहाणेन समुद्रपदवाच्यमहासलिलावयवैस्सह विभागानर्हस्संयोगविशेषः । तदानीं प्रवाहत्वरूपावस्थाभावादेव प्रविष्टजलांशे न नदीत्वव्यवहारः। ईदृशलयस्य पूर्वमभावादेव न नद्यां समुद्रत्वव्यवहारोपि । उभयावस्थानुगतं सलिलत्वम् । एवं 'सलिलाद्बुद्बुदो जायत' इत्युक्तं सलिलाद्बुद्बुदस्य जननं नाम — अनेकसलिलांशान्तर्गतस्य कस्यचित्सलिलांशस्य तटाकत्वाद्यात्मकमहासलिलत्वावस्थाप्रहाणेन सलिलत्वावस्थायां सत्यामेव बुद्बुदत्वावस्थाप्राप्तिः । तत्र यस्सलिलांशो बुद्बुदत्वरूपेण परि-

णतः, सोंऽशस्तं प्रत्युपादानमुच्यते । स तु कार्यरूपेण परिणामदशायां स्वेन रूपेण न विद्यत एव ।

एवं बुद्बुदस्य स्वकारणे जले लयो नाम, त्यक्तबुद्बुदत्वावस्थस्य प्राप्ततटाकत्वादिरूपमहासलिलत्वावस्थस्य सलिलांशस्य पूर्वस्थिततादृशावयवान्तरैस्सह संयोगविशेषः । सलिलाद्बुद्बुद उत्पद्यत इत्यत्रापि सलिलपदं बुद्बुदत्वेन परिणंस्यमानसलिलांशसजातीयसलिलांशान्तरपरम् । कस्यचित्सलिलांशस्य बुद्बुदत्वेन परिणाम एव तत्सजातीयांशान्तराद्विभाग इति व्यपदिश्यते, तदा तदेवापादानमित्युच्यते । एवञ्च सति, कारणात्कार्यमुत्पद्यते, कारण एव लीयत इति पञ्चम्यन्तसप्तम्यन्तपदाभ्यां कार्योपादानभूतकारणद्रव्यांशात्यन्तसजातीयांशान्तरमेवोच्यते । एकस्यैव च लयापेक्षयाधिकरणत्वं, उत्पत्तिरूपविभागापेक्षयाऽपादानत्वञ्चेति बोध्यम् । एवमेव पृथिव्यप्सु प्रलीयत इत्यत्र, पृथिवी पृथिवीत्वावस्थां हित्वा अम्ब्ववस्था सती प्रागवस्थितेषु समुद्रादिजलेषु संसृष्टा भवतीत्यर्थः । अद्भ्यः पृथिवी जायत इत्यत्रापि, अप्त्वावस्थानेकांशान्तर्गतः कश्चनांशः त्यक्ताप्त्वावस्थस्सन् प्राप्तपृथिवीत्वावस्थो भवतीत्यर्थो ज्ञेयः । इत्थञ्च ब्रह्मणो जगज्जायते, ब्रह्मणि लीयते, इत्यत्रापि ब्रह्मशब्दस्य प्रकृतिविशिष्टपरमात्मपरत्वात्, विशेषणीभूतप्रकृतौ महदादितत्तत्कार्योपयुक्तकारणांशातिरिक्तांशापेक्षया विशिष्टस्य ब्रह्मणो लयाधिकरणत्वोत्पत्त्यपादानत्वव्यवहारस्तत्रतत्र श्रूयमाणो निर्बाध इत्यनुसन्धेयम् ॥

अस्तु वा अंशान्तरसंयोगतद्विभागावुपेक्ष्य केवलं पूर्वावस्थोत्तरावस्थे एव सर्गलयौ, यथा हिरण्यात्कुण्डलमित्यादौ । सर्वथा ब्रह्मणो जगज्जायते ब्रह्मणि लीयते इति व्यवहारतो जगन्मिथ्यात्वलाभायोगेन परेषामीदृशस्थले तत्सिद्धिप्रतिज्ञानं वस्तुस्थित्युपपत्तिविरुद्धमेवेति ध्येयम् । वाचारम्भणमित्यादिश्रुत्या विकारजातानृतत्वप्रतिपादनमपि परेषां वृथायास एव; मृदादिवत् घटादेरपि प्रतिपन्नोपाधौ कदापि बा-

धादर्शनेन 'आदित्यो यूपः' 'वह्निरनुष्ण' इत्यादिवाक्यवत्तस्य वाक्यस्य मृत्तिकैव सत्या, घटादिर्मिथ्येति प्रत्यक्षविरुद्धार्थप्रतिपादकत्वायोगात्। तस्यार्थस्य तद्वाक्यात्स्वरसतोऽप्रतीत्यादेः पूर्वमेवोक्तत्वाच्च । ततश्चेयमप्युपनिषत्परपक्षपराङ्मुख्येवेति सिद्धम् ॥ १७ ॥

अग्निरहस्योपनिषदपि सूक्ष्मचिदचिद्विशिष्टस्य नारायणस्यैव परमकारणत्वं, स्वाभाविकानेकगुणविशिष्टस्य वैश्वानरपुरुषादिपदवाच्यस्य तस्योपासनान्मुक्तिश्च प्रतिपादयति । तथाहि, उपक्रमे – 'नैव वा इदमग्रे सदासीन्नैवाऽसदासीत् असदिव वा इदमग्रे सदिव वाऽऽसीत्' इति श्रूयते । अत्र सदासीदिति सच्छब्दः अभिव्यक्तनामरूपकस्थूलवस्तुपरः । 'असदासी' दित्यत्र सच्छब्दः सत्ताश्रयमात्रपरः । तथाच इदं जगत् सर्गादौ नैव सदासीत् ; नामरूपाभिव्यक्त्यभावात् । स्वरूपतस्सत्त्वान्नैव शून्यमासीत् । शशशृङ्गादिवदत्यन्तासत्त्वं, सर्गसमय इवात्यन्तसत्त्वञ्च कारणवस्तुनस्तदा नासीदित्यर्थः । तदेव तात्पर्यं विधिरूपेणाभिव्यनक्त्युत्तरं वाक्यम् । इदमग्रे नामरूपव्यक्त्यभावादसत्तुल्यमासीत्, स्वरूपतस्सत्त्वात्सत्तुल्यमासीदित्यर्थः । अयं भावः – शशशृङ्गादिविलक्षणस्य केनचित्प्रमाणेन सिध्यतः पदार्थजातस्य केवलसत्त्वं स्थूलत्वरूपविशिष्टसत्त्वञ्चेति द्विविधं सत्त्वमस्ति । शशशृङ्गादित्वीदृशद्विविधसत्वशून्यम् । तत्र कारणदशायां विद्यमानस्य विशिष्टसत्त्वाभावात् सर्वथाऽसत्त्वाभावाच्च स्थूलतुच्छोभयवैलक्षण्यम् ; सत्त्वाश्रयत्वेन प्रपञ्चसादृश्यम् । विशिष्टसत्वशून्यत्वेन तुच्छसादृश्यञ्चेति । इदञ्च वस्तु ब्रह्मात्मादिशब्दघटितकारणवाक्यान्तरैककण्ठ्यात् ब्रह्मरूपम् । एवञ्च निरवयवनिर्विकारनिष्कृष्टब्रह्मणस्सूक्ष्मस्थूलसत्तासाहित्यराहित्ययोर्दुस्सम्पादतया जगद्रूपपरिणामसमर्थप्रमाणप्रतिपन्नप्रकृत्यादिशब्दिताचिद्वस्तुविशिष्टत्वेनैव तस्मिन् ते उपपादनीये इत्युपपत्त्या प्रमाणकण्ठोक्त्या च सूक्ष्मत्रिगुणद्रव्यविशिष्टं ब्रह्मैवात्र कारणत्वेनोच्यत इत्याशयम् । न च वाच्यं तदेव द्रव्यं कारणमुच्यताम् ; किं तद्विशिष्टग्रहणेनेति; अस्य 'ईक्षते-

र्नाऽशब्द ' मित्यादिना विस्तरेण सूत्रकारैरेव निरस्तत्वात् । इदञ्च कारणं ब्रह्म, नारायण इत्येतदपि 'एको ह वै नारायण आसी ' दित्यादि-कारणवाक्यान्तरैककण्ठ्यात्सिद्धम् । तस्मादत्रापि स्थलान्तर इव कारणत्वौपयिकसर्वज्ञत्वादिविशिष्टसूक्ष्मप्रकृतिपुरुषशरीरकः परमात्मा नारायण एव कारणं, स एव स्थूलप्रकृतिपुरुषविशिष्टो जगद्रूपं कार्यमिति, तत एव कार्यकारणयोरेकद्रव्यत्वसत्यत्वादिकमिति च निराबाधं सिध्यत्येव ।

इदञ्च वाक्यं अविद्योपहितनिर्विशेषब्रह्मकारणवादे न सङ्गच्छते, कालविशेषे जगतस्सदसद्विलक्षणत्वसदसत्तुल्यत्वयोः प्रतिपादनात् । ननु प्रथमवाक्येन सदसदनिर्वचनीयमज्ञानमुच्यते, ब्रह्मकारणत्ववादि वाक्यान्तरानुगुण्यात् तदुपहितब्रह्मकारणत्वमुक्तं स्यादिति चेन्न – इदं जगत् , कालविशेषे नैव सदासीत् , नैव असदासीदित्युक्ते, इदंपदवाच्ये जगति कालविशेषे सत्त्वासत्त्वनिषेधयोरेव प्रतीत्या, सदसदनिर्वचनीयाप्रतीतेः । न च इदमग्रे सदसद्विलक्षणमासीदिति श्रूयते । न वा 'न सदित्ये' वं समस्ततया श्रूयते । अतोऽत्राज्ञानोपस्थापनमशक्यम् । किञ्चोत्तरवाक्यमपि तत्पक्षं प्रतिरुणद्धि । जगतः कालविशेषे सदसत्तौल्यप्रतिपादनस्य तत्पक्षे सर्वथाऽसंभवात् । किं बहुना, एकमेव वस्तु स्थूलसूक्ष्मावस्थाद्वयविशिष्टं सत्यमिति यावता नाभ्युपेयते, न तावतेदं वाक्यं सामञ्जस्यमनुभवितुमलमिति । अस्यामेव (४ - ब्रा) वैश्वानरविद्या समाम्नायते । तत्र प्रकरणे 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति तद्विद्यावेद्यस्याग्निवैश्वानरशब्दितस्य पुरुषत्वमुच्यते । यत्पुरुष इत्युक्त्या सहस्रशीर्षः पुरुषः इत्यादिवेदान्तवाक्येषु प्रसिद्धो यः पुरुषः, स एष वैश्वानरोऽग्निः इत्यन्वयः प्रतीयते । इत्थञ्च वेद्यस्य पुरुषसूक्तोक्तसकलाकारवैशिष्ट्यं सिध्यति । पूर्वोक्तबृहदारण्यकवाक्येन पुरुषपदस्य सर्वकारणत्व – सर्वपापदाहकत्वरूपाकारद्वयपरत्वञ्च सिद्धम् । विद्याफलञ्च सर्वपापविनिर्मोकरूपमिति 'अप पुनर्मृत्युं जयती' त्यन्नै-

वोक्त्या सिद्धम् । छान्दोग्योक्तवैश्वनरविद्याया अस्याश्च रूपाद्यैक्यादेकत्वेनापि मोक्ष एव फलमिति सिद्धम् । मुक्तेर्द्वैविध्यस्य निष्प्रमाणकत्वात् मुक्तिरियं सगुणब्रह्मोपासनजन्या मुख्यैवेत्यपि प्रतिपत्तव्यम् । तस्मादियमप्युपनिषत्पूर्वोपनिषत्समानैवेति स्थितम् ।। १८ ।।

कौषीतक्युपनिषदप्येदम्पर्येणाऽर्चिरादिगतितत्प्राप्यदेशविशेष तद्विशिष्टब्रह्मानुभवप्रकारप्रतिपादिनी परमतविरुद्धैव । तथाहि - तत्र 'ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती' तीष्टापूर्तादिकारिणां विदुषाश्चास्माल्लोकात्प्रस्थितानां मध्येमार्गं चन्द्रप्राप्तिरुक्ता । यथाकर्म यथाविद्यमित्युत्तरत्र श्रवणादुक्ताधिकारिद्वयविषयेयं चन्द्रप्राप्तिः । 'एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमा' इति च चन्द्रस्य भगवल्लोकदौवारिकप्रायत्वमुच्यते । अत्र स्वर्गपदमप्राकृतदेशपरम्, न देवलोकपरम् ! विदुषा प्राप्यदेशविशेषादेरेवात्र प्राधान्येन प्रतिपिपादयिषितत्वात् । तच्छेषतयैवानिष्टादिकारिप्रस्तावस्य क्वचित्कृतत्वात् । अत्र तं प्रतिब्रूयादित्यादिना विदुषश्चन्द्रमसश्च मिथस्संवादविशेषः श्रूयते । कोऽसीति चन्द्रमसा पृष्टो विद्वानुत्तरमाह विचक्षणादिति षड्भिः । हे कालप्रवर्तकाः! निषेकादिकर्मकर्तृविचक्षणपित्रुत्पन्नश्रद्धासोमवृष्ट्यन्नरेतोरूपावस्थापञ्चकयुक्त- शोणितसंभृतभूतसूक्ष्मशरीरकोऽस्मि, इतः परं निषेककर्तरि पुंसि रेतोरूपेणावस्थानाय मां मा प्रेषयतेति द्वयोरर्थः । अथ द्वाभ्यां पूर्वानुभूतं स्वस्यानेकयोनिसम्बन्धगर्भवासादिकमनुवदन्नाह पुनरपि 'तन्मा ऋतवो मर्त्यव आभरध्व' मिति । हे कालप्रवर्तकाः! तस्माद्धेतोस्संसाराय मां मा समर्पयतेत्यर्थः। असमर्पणे हेतुमाह 'तेन सत्येन तपसर्तुरस्म्यार्तवोऽस्मि त्वमस्मी' ति । भगवच्छरणवरणरूपेण तपसा प्रसन्नेन तेन सत्येन परमात्मना हेतुनाऽहं मासादिकालरूपोऽस्मि; तद्वर्तिपदार्थरूपोऽस्मि; चतुर्मुखोऽस्मि; त्वमप्यस्मीति तदर्थः । अत्राध्याहृतमहंपदं ऋत्वादिपदचतुष्टयञ्च तद्वाच्यशरीरकपरमात्मपरम् । कालादीनां मम चैकात्मकत्वान्मा समर्पयतेति पूर्वेणान्वयः। अस्य चैकात्मकत्वस्य नि-

त्यस्य, स्वरूपसतस्संसारासमर्पणहेतुत्वायोगेन परमात्मप्रसादसाध्यत्वायोगेन चात्र तद्ज्ञानं विवक्षितम् । एवमुक्तवन्तं भगवल्लोकगमनायानुजानाति चन्द्रमा इत्याह 'तमातिसृजत' इति । स एतं देवयानमित्यादिना चन्द्रमसाऽनुमतस्य विदुषोऽर्चिरादिगत्यादिकं विस्तरेणाऽऽह ।

प्रकरणमिदं परमते न सङ्गच्छते, 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेती'ति बृहदारण्यकवाक्यतुल्यतया 'तेन सत्येन.... त्वमस्मी' त्यस्यापि ब्रह्मविद्याफलभूतसर्वभावापत्तिपरतया तत्प्राप्त्यनन्तरं विदुषः प्राप्यान्तरायोगेन 'तमातिसृजते' 'स एतं देवयानं पन्थान' मित्यादिभिरुपरितनवाक्यैस्तस्यार्चिरादिमार्गप्राप्त्यादिप्रतिपादनायोगात् । तद्धि वाक्यं – 'तदेतद्ब्रह्म पश्यन्नि' ति ब्रह्मविद्या परामृश्यते । अहं मनुरभवं सूर्यश्चेत्यादिना सर्वभावापत्तिं ब्रह्मविद्याफलं परामृशति । पश्यन्सर्वात्मभावं फलं प्रतिपेद इत्यस्मात्प्रयोगाद्ब्रह्मविद्याऽसहायसाधनसाध्यं मोक्षं दर्शयति । भुञ्जानस्तृप्यतीति यद्वत्'– इति परैर्विवृतम् । एवं यथाविद्यं तमागतमिति विदुषः पूर्वमुक्ता चन्द्रप्राप्तिरपि न सङ्गच्छते । उक्तसाक्षात्कारस्योत्क्रान्तेः पूर्वमेव स्थितत्वात् । नहीदानीमेव तादृशसाक्षात्कारस्संजात इति तेन सत्येनेत्यादिनोच्यते; अपितु पूर्वस्थितमेव स्वकीयं ज्ञानं संसारासमर्पणहेतुतयाऽनूद्यत इति ।

नन्वत्रार्चिरादिगत्यादिकमर्वाचीनसगुणब्रह्मविद एवोच्यते, अन्यथा गत्यनुपपत्तेः । सा हि देशविशेषप्राप्त्यर्था प्राप्यं फलं सर्वभावव्यतिरिक्तं परिच्छिन्नमवगमयति । अत एव तेन सत्येनेति वाक्यस्य न तद्धैतदित्यादिवाक्यसमानार्थकत्वमिति चेन्न; निर्गुणं सगुणमिति, परमपरमिति च द्वैविध्यं सर्वात्मना प्रमाणविधुरमित्यस्य द्वाविंशेऽधिकारे सम्यगुपपादयिष्यमाणत्वात् । निर्गुणविद्यापरत्वेन पराभिमतेषु प्रकरणेष्वेव च गुणानामर्चिरादिगतेर्वा श्रवणेन तदाभिमतविद्याविभागस्य दुस्स्थत्वात् ।

तथाहि – पराभिमतनिर्गुणब्रह्मप्रकरणेषु – कठवल्ल्यां 'शतञ्चै-

का च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेती' त्युत्क्रान्तिगती प्रतिपाद्येते । तथा भूमविद्यायां 'स एकधा भवति त्रिधा भवती' त्यनेकशरीरपरिग्रहश्श्रूयते । निर्विशेषब्रह्मभावापत्तिस्तु तत्र नाघ्रातापि । तत्र केनचिद्युक्त्याभासेन निर्गुणविद्यात्वमङ्गीकृत्य श्रूयमाणगुणानां प्रकरणान्तरगतसगुणविद्यासम्बन्धवर्णनन्तु साहसमेव । तथा प्रजापतिविद्यायां 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति शरीरादुत्क्रान्तिश्श्रूयते । तथा सद्विद्यायामपि 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति प्रारब्धावसाने ब्रह्मसम्पत्तिरित्युक्त्वा तदर्था 'यदाऽस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया' मित्युत्क्रान्तिः प्रतिपाद्यते। तथा वाजसनेयके षष्ठे तदभिमतनिर्गुणविद्यायामेव 'अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । तेन धीरा उपयन्ति ब्रह्मविदस्स्वर्गं लोकमित ऊर्ध्वं विमुक्ता' इति गतिः कथ्यते । उक्तप्रकरणेषु यथायथं तत्तद्गुणयोगोपि बोध्य इति ।

इत्थञ्च सगुणविद्यातिरिक्तपरविद्याऽभावात् निर्गुणं ब्रह्म किञ्चित्, तद्विद्या काचनेति सिद्धवत्कृत्य प्रकृते गत्यादिश्रवणात्सगुणविषयत्वमित्युक्तिर्निरालम्बना । गतिश्रुतिस्तु ब्रह्मणस्सर्वव्याप्तत्वेपि विग्रहादिविशिष्टतदनुभवस्वकीयस्वाभाविकगुणाष्टकाविर्भावादिरूपमुक्तेर्देशविशेषप्राप्त्यनन्तरतया तदर्थां गतिं प्रतिपादयतीति न कोपि विरोधः । एवमुपर्यप्यत्र ब्रह्मणश्चिदचिद्विशेषशरीरकत्वं, आनन्दत्वादिगुणविशिष्टत्वं, तादृशब्रह्मोपासनेन सगुणब्रह्मानुभवादिरूपमुक्तिश्च प्रतिपाद्यत इति सुस्पष्टम् । सर्वञ्चेदं पूर्वाचार्यैर्विस्तरेण विचार्य स्थापितम् । तत इयमप्युपनिषत्पूर्वोपनिषत्सोदर्येवेति सिद्धम् ॥ १९ ॥

ऐतरेयोपनिषदपि परमात्मनः प्रपञ्चोपादानत्वनिमित्तत्वे, तदुपयुक्तं स्वाभाविकसर्वज्ञत्वादिगुणगणं, प्रत्यक्परमात्मभेदं, तद्विषयकोपासनस्य दर्शनसमानाकारस्य मोक्षसाधनत्वं, शरीरादुत्क्रान्तस्योर्ध्व

लोकविशेषं प्राप्तस्य सर्वानिष्टनिवृत्तिपूर्वकसर्वकामावाप्तिरूपां मुक्तिञ्च प्रतिपादयन्ती पराभिमतांस्तत्त्वहितपुरुषार्थान् नितरां निवारयत्येव । तथाहि – उपक्रमे 'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति, स इमांल्लोकानसृजते' ति श्रूयते । अत्रात्मशब्दः 'आप्नोतेरत्तेरततेर्वा आत्मा, परस्सर्वज्ञस्सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितः' इति परैरेव व्याख्यातः । 'यदिदं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतस्सृष्टेः प्रागासी' दिति इदंपदाग्रेपदविवरणपूर्वकमन्वयश्च दर्शितः । तथाचेदं विभक्तनापरूपं जगत्, अविभक्तनामरूप – सर्वव्यापकत्वादिगुणविशिष्टहेयगन्धरहितपरमात्माभिन्नं सृष्टेः प्रागासीदित्युक्तं भवति । इत्थञ्चात्र जगद्ब्रह्मणोरभेदस्सत्यत्वं कार्यकारणभावः परमात्मनस्स्वाभाविकानेकाकारविशिष्टता च स्वरसतः प्रतीयत इति परेषामपि दुरपलपमिदम् । असति बाधके आत्मपदोपस्थापितगुणानां स्वाभाविकत्वस्य, जगत उत्सर्गसिद्धसत्यत्वस्य च निवारकाभावात् । सत्यमिथ्यार्थयोरैक्यायोगेन सत्यब्रह्माभिन्नत्वेनोक्तस्य जगतस्सत्यताया अपरिहार्यत्वाच्च ।

यत्त्वत्रोक्तरीत्या आत्मपदं व्याख्याय पुनः 'नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽभयोऽद्वय' इति तद्विवरणं, तत् कण्ठोक्तगुणादिनिषेधाय न प्रभवति । किञ्चैभिः पदैर्विभिन्नधर्माः प्रतिपाद्यन्ते, नवा, आद्येऽनेकविशेषवैशिष्ट्यमात्मनो दुष्परिहरम् । द्वितीये वैयर्थ्यम् । न च तैर्व्यावृत्तिरूपा धर्माः प्रतिपाद्यन्ते; ते च ब्रह्मैवेति न दोष इति वाच्यम् – व्यावृत्तेरेकत्वे एकेतरविशेषणवैयर्थ्यात् । तत्तत्प्रतियोगिविशिष्टत्वेन तद्बहुत्वेपि ब्रह्मणो व्यावृत्तिरूपत्वासम्भवेन व्यावृत्तिमत्त्वस्यैव वक्तव्यतया सविशेषत्वं पुनरप्यायातम् । भ्रमविरोधिनोऽसाधारणधर्मस्यैव व्यावृत्तिस्वरूपत्वाभ्युपगमात् । व्यावृत्तिर्भेद इति चानर्थान्तरम् । भेदग्रहणेनैवाभेदभ्रमनिवृत्तिः । यद्ग्रहणेन तदाश्रयस्येतरतादात्म्यभ्रमो निवर्तते, तस्यैवाश्रयासाधारणस्य धर्मस्य व्यावृत्त्यात्मक-

त्वमङ्गीकर्तुं युक्तम्। प्रकृते च स्वतन्त्रस्य, स्वरूपे भासमाने भ्रमसह स्य ब्रह्मणस्तादृक्त्वाभावेन व्यावृत्तिरूपत्वाभ्युपगमो न युज्यते! ततः नित्यशुद्धेत्यादिना निर्विशेषोपस्थापनमशक्यमिति।

यत्त्वत्रानन्दगिरिणोक्तं– 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते इति स्मृत्युक्तव्युत्पत्त्या रूढ्या चात्मपदस्य भाष्योक्तार्थलाभ' इति तदसङ्गतम्। परस्परविरुद्धयोस्सविशेषत्वनिर्विशेषत्वयोर्युगपदेकपदप्रतिपाद्यत्वासम्भवात्। योगरूढत्वेनाभिमतपङ्कजपदस्य पङ्कजनिकर्तृत्वरूपावयवार्थमात्रविवक्षायां कुमुदादीनामपि तादृशत्वात्तत्रापि प्रयोगवारणाय पद्मत्वं रूढ्यर्थतयाऽङ्गीक्रियते। तथाच तत्र पङ्कजनिकर्तृत्वपद्मत्वरूपधर्मद्वयविशिष्टे पङ्कजपदं मुख्यवृत्तमिति एकैकाश्रये तत्पदममुख्यमेवेति वस्तुस्थितिः। प्रकृते – आत्मशब्दस्य सर्वज्ञत्वादिविशेषविशिष्टमात्रपरत्वेऽप्यतिप्रसङ्गाभावेन केवलयौगिकत्वमेव युक्तमिति निर्विशेषत्वस्य रूढ्यर्थतावच्छेदकत्वकल्पनं निर्निबन्धनम्। नहीदृशप्रपञ्चसृष्टिहेतुभूतसर्वज्ञत्वसर्वशक्तित्वादिविशिष्टमात्मान्तरमस्ति। पङ्कजपदवदात्मपदस्यावयवार्थसंवलितरूढ्यर्थविशिष्टवस्तुपरत्वञ्च दुर्घटम्। तयोरेकत्र समावेशायोगात्। न चेश्वरेऽतिप्रसङ्गवारणाय निर्विशेषत्वस्य तथात्वमङ्गीकार्यं, समानसत्ताकयोरेव भावाभावयोर्विरोधेन विशेषतदभावयोस्समावेशश्च संभवति; विशेषसम्बन्धस्यापारमार्थिकत्वात्, तदभावसम्बन्धस्य पारमार्थिकत्वाच्चेति वाच्यम्, तथासतीश्वरस्यापीदृशाकारद्वयवत्त्वेन तस्य व्यावर्त्यत्वासंभवात्। नन्वीश्वर एवेदंपदं योगरूढमिति चेन्न, रूढेर्निष्प्रयोजनत्वप्रसङ्गात्। 'सर्वज्ञादिशब्दोपलक्षितस्सत्यज्ञानानन्दरूपाखण्डैकरस आत्मा उपक्षिप्त' इति वक्ष्यमाणविरोधाच्च। किञ्च निर्विशेषत्वं रूढ्यर्थतावच्छेदकमित्यत्र प्रमाणमपि नोपलभ्यते। सिद्धान्ते तु त्रयः प्रकारा बोध्याः, आप्नोतीत्यात्मेति अन्तर्यामित्वेन यत्किञ्चिद्व्याप्तिमात्रविवक्षायां जीवपरसाधारण आत्मशब्दः। तत्रैव नारायणत्वस्य रूढ्यर्थत्वविवक्षायां

भगवत्येवायं योगरूढः । निरुपाधिकसर्वान्तर्यामित्वरूपव्याप्तिविवक्षायां तस्मिन्नेव केवलयौगिक इति । अत्रानन्तरे पक्षद्वये जीवात्मादावौपचारिक एव प्रयोग इति बोध्यम् । 'अततीति व्युत्पत्त्या त्रिविधपरिच्छेदराहित्यं लभ्यत' इति यदुक्तं, तन्न । 'अत – सातत्यगमने' इति स्मरणाद्वाय्वादीनामिव ब्रह्मणस्सदागमनशीलत्वमेव लभ्येत । तच्च विभोर्विरुद्धम् । 'सन्ततो भाव' इति स्मृत्यापि सदैकरूपसत्ताश्रयत्वमेव लभ्यते । 'सत्ताप्रदानेनोपादानत्वसूचनात्सर्वशक्तित्वं लभ्यत' इत्येतदप्यसङ्गतम् । सत्तापदेन पारमार्थिकसत्ताविवक्षायां जगतस्सत्यत्वप्रसङ्गात् । प्रातिभासिकविवक्षायामपसिद्धान्तात् । व्यावहारिकविवक्षायां सर्वशक्तित्वसूचनायोगात् । अधिकभ्रमवत्त्वं हि तदा लभ्येत । न हि लोके नितरां भ्रान्तस्सर्वशक्तिरिति व्यवह्रियत इति ।

यत्तु–'नान्यत्किञ्चनमिष' दित्यत्रानन्दगिरीये वाक्यार्थवर्णनं' यथा सांख्यमते आत्मापेक्षयाऽन्यत्स्वतन्त्रं स्वतस्सत्ताकं प्रधानमस्ति, यथा वा काणादमते तथाविधा अणवस्सन्ति तथाऽऽत्मापेक्षया स्वतन्त्रं स्वतस्सत्ताकंकिमपिनास्ति, मायात्वात्मशक्तितयाऽऽत्मन्येवान्तर्भूतेति तत्सत्त्वेप्यन्यनिषेध उपपद्यते । इदं जगदग्रे सजातीयविजातीयस्वगतभेदरहितात्मैवासीदिति 'आत्मा वा'इत्यादेर्मिषदित्यन्तस्यार्थः । यद्यप्यात्मशब्देनैव ब्रह्मणोऽखण्डैकरसत्वमुच्यते, तथापि तदेव, एकशब्दः, एवकारः, 'नान्यत्किञ्चन मिष' दिति वाक्यञ्च क्रमेण सजातीयभेद स्वगतभेद विजातीयभेदान्निराकुर्वन्ति सन्ति दृढीकुर्वन्ति ; नचाग्रे जगत आत्ममात्रत्वोक्तेर्न किञ्चित्प्रयोजनम् ; 'आत्मा एक एवासीत्, नान्यत्किञ्चन मिष' दित्येतावतैवात्मनोऽखण्डत्वसिध्देरिति शङ्क्यं, जगतोऽद्वितीयात्ममात्रत्वेन मृषात्वमिति सूचनायैव तथोक्तेः । ननु 'इदमात्मैवासी' दिति सामानाधिकरण्येनात्मनो जगद्वैशिष्ट्यमेव प्रतीयते, न तु मृषात्वमिति चेन्न – आत्मा, एकः, एव, इति पदैरुक्ते अखण्डैकरसे तद्विपरीतजगत्प्रतीतेरतस्मिंस्तद्बुद्धिरूपत्वेन मृषात्वसिद्धेः । जगद्वैशिष्ट्यस्य, घटस्सन्नित्यादिरूपेण प्रत्यक्षसिद्धतया प्रयोजनाभावेन च तत्प्रतिपादनानुपपत्तेरपि मृषात्वमेव तदर्थ इत्यास्थेयम् । 'न मिष' दिति स्वतन्त्रवस्त्वन्तर-

निषेधेन, तस्य स्वतस्सत्तानिषेधादपि मृषात्वसिद्धिः । नचेदानीमपि जगन्मृषात्वात्माखण्डत्वयोर्वक्तुं शक्यत्वात् अग्र इति व्यर्थमिति वाच्यम्, इदानीमात्मभिन्नतया पृथक्सत्त्वेन च प्रतीयमानस्याऽऽत्ममात्रत्वे बोधिते विरोधिप्रतीत्या सहसा तस्य बुध्द्यनारोहस्स्यादिति गुडजिह्विकान्यायेन पृथङ्नामरूपानभिव्यक्तिदशायामात्ममात्रत्वबोधने पश्चात्तन्न्यायेनेदानीमप्यात्ममात्रत्वं ज्ञास्यतीति तत्सार्थक्या' दिति॥

यदपि विद्यारण्येन दीपिकायामेतद्वाक्यार्थवर्णनं – 'व्यवहारविशिष्टः केवलश्चेत्यात्मा द्विविधः । व्यवहारेपि जागरणस्वप्नसुषुप्तिरूपेण त्रिविधः । तत्र 'यच्चाप्नोती' त्यादिस्मृत्या पूर्वार्धेन व्युत्क्रमेणावस्थात्रयमात्मन उच्यते । परमानन्दरूपं ब्रह्म प्राप्नोति, जागरणस्थपदार्थवासना आदत्ते, बाह्यविषयान्भुङ्क्ते इति तदर्थात् । उत्तरार्धेन कैवल्यम् । भावः – स्वभावविशेषः । सन्ततः — परिच्छेदरहितः । तथाचाखण्डैकरसत्वेन सन्ततत्वमात्मशब्दप्रवृत्तिनिमित्तमिति । आत्मशब्दः यौगिको रूढो वाऽखण्डैकरसमसर्वजगदधिष्ठानतदीयवास्तवस्वरूपभूतपदार्थपरः । प्रतीयमानमिदं जगत् सृष्टेः पूर्वमात्मैवासीत ; न तु तत्कार्यभूतं नामरूपात्मकं जगदासीदिति वाक्यार्थः । वैशब्देनात्मगोचरौ शब्दप्रत्ययावपि नास्तामित्युच्यते । लोके घटशरावादिकार्यं यावदभावानपि मृद्विषयौ शब्दप्रत्ययौ स्तः, न तथात्रेति । इदञ्च सामानाधिकरण्यं बाधार्थं, यज्जगत्त्वेनेदानीं प्रतिभासते, तज्जगन्न भवति, किन्त्वात्मेति । कालवाचकशब्दः 'आसी' दिति च परप्रसिद्ध्यैव । अन्यथा सत्ताविशिष्ट आत्मेत्यर्थाङ्गीकारेऽखण्डैकरसत्वं हीयेत । अन्यत् – प्रकृतादात्मनो विलक्षणं वस्तु, न मिषत्–नासीदित्यर्थः ; धातूनामनेकार्थत्वात् । सर्वथा सर्वभेदशून्य आत्मात्र विवक्षित ' इति ।

**तदेतत्सर्वमसङ्गतम् । सत्यभूतप्रकृतिव्यतिरेकेण मिथ्याभूतमायायाः कारणभूतात्मशक्तित्वस्य प्रमाणतोऽलाभात् 'नान्य' दिति निषेधस्य तद्व्यतिरिक्तविषयत्वेन सङ्कोचासंभवात् । मिथ्यात्वेन ब्रह्मान्तर्भूतत्वोक्तिरप्ययुक्ता, सत्येऽसत्यान्तर्भावादर्शनात् । मिथ्यार्थस्य सत्यशक्तित्वमप्यनुपपन्नमदर्शनादेव । मिथ्यार्थस्य शक्तित्वमेव दुर्घटम् ; कार्योपयोग्यपृथक्सिद्धविशेषणत्वस्यैव शक्तित्वरूपत्वात् ; तथात्वाङ्गी-**

कारेऽर्थक्रियाकारित्वप्रसङ्गेन मिथ्यात्वासिद्धेः । आत्मशब्दोऽखण्डैकरसपर इत्यप्ययुक्तं, तस्य चतुर्धा व्युत्पत्तिप्रदर्शनायोगात् । जगत आत्ममात्रत्वोक्तिप्रयोजनवर्णनमपि विरुद्धम् ; सत्यात्ममात्रत्वोक्त्या जगतस्सत्यब्रह्मभिन्नानात्मकत्वं सिध्येत्, न मिथ्यात्वमिति । न हि घटस्य मृत्तिकामात्रत्वोक्त्या कोपि मिथ्यात्वं जानाति । अपितु मृत्तिकातिरिक्तानात्मकत्वम् । अन्यथा घटोऽयं प्राङ्मृत्तिकैवासीदित्युक्ते, तस्य लोहाद्यात्मकत्वमपि जानीयादविशेषात् । न चेदमासीदितीदमर्थस्य कार्यत्वसिद्ध्या ; वाचारम्भणश्रुत्या मिथ्यात्वसिद्धिरिति वाच्यम् । 'जगतस्तथाविधात्ममात्रतया मृषात्वं सूचित' मिति भवत्पङ्क्त्या तदर्थालाभात् । आत्मकार्यतयेति हि तदा प्रयोक्तव्यम् । वाचारम्भणश्रुतेर्मिथ्यात्वपरत्वासम्भवस्योपपादितत्वाच्च । यच्च सामानाधिकरण्येन जगद्वैशिष्ट्यसिद्धिमाशङ्क्योक्तम् – अखण्डैकरसे तद्विपरीतजगत्प्रतीतेर्भ्रमत्वमेवेति । तच्चायुक्तम् । भवदुपात्तस्मृत्यैवात्मपदस्यानेकविशेषणविशिष्टपरत्वसिद्ध्याऽखण्डैकरसाप्रतीतेः । विशेषणमिथ्यात्वाद्वस्तुतो निर्विशेष एव तदर्थ इति तु नेदानीं वक्तुं शक्यम् । मिथ्यात्वस्यासिद्धतयाऽन्योन्याश्रयात् । एकशब्द एवकारश्च प्रथमश्रुतात्मपदार्थानुरोधेनैव नेयौ, नीतौ च नीतिविद्भिः ।

जगद्वैशिष्ट्यस्य प्रत्यक्षसिद्धत्वकथनमप्यसङ्गतं स्वमतविरुद्धश्च । घटस्सन्नित्यादौ घटादिनिष्ठकालसम्बन्धित्वाद्यात्मकसत्ताव्यतिरेकेण ब्रह्मप्रतीतेरजननात् । तत्र सत्ताया ब्रह्मरूपत्वे घटोसन्, पटोसन्नित्यादावसत्ताया अपि तद्रूपत्वं दुर्वारम् । ब्रह्मणःप्रत्यक्षविषयत्वे मेयत्वेन घटादिवज्जडत्वप्रसङ्गः शास्त्रस्यानुवादरूपत्वेनाप्रामाण्यप्रसङ्गश्च; प्रमाणान्तरसिद्धत्वेऽनधिगताबाधितार्थकत्वरूपप्रामाण्यस्य दुर्वचत्वात् । नापि ब्रह्मणो जगद्वैशिष्ट्यप्रतिपादनं निष्प्रयोजनम् । स्वातन्त्र्येण प्रतीयमानस्य जगतो ब्रह्मकार्यत्वनियाम्यत्वादिरूपाप्रतिपन्न – वास्तवाकारज्ञापनार्थतया महाप्रयोजनत्वात् । न मिषदिति स्वतन्त्रवस्त्वन्तरनिषेधे

च वस्तुनः परतन्त्रत्वं सिद्ध्येत्, न मृषात्वम् । स्वतस्सत्तानिषेधेपि पराधीनसत्ता स्यादेव । न च स्वतस्सत्ताकत्वं सत्यत्वं ; पराधीनसत्ताकत्वं मृषात्वमिति वाच्यम् — पारिभाषिकत्वापत्तेः । पराधीनसत्ताकमप्यर्थक्रियाकारित्वात्सत्यमेव ह्युपलभ्यते ।

यच्च अग्र इत्यस्य सार्थक्यवर्णनं, तदप्ययुक्तम् । इदं सर्वमात्मैव, तद्व्यतिरिक्तं किमपि स्वतस्सत्ताकं स्वतन्त्रं नास्तीत्युक्तौ सुखेनार्थस्य बुध्यारोहसम्भवेनेदानीं तन्निषेधेप्यनुपपत्त्यभावात् । सहसेदं नास्तीत्युक्तिर्हि नारोहेत् । यस्तावत्कारणदशायां पराधीनसत्ताकं सूक्ष्मं वस्त्वङ्गीकरोति, स कार्यदशायां स्थूलं वस्त्वङ्गीकुर्यादेव । अत्राग्रपदाभावेऽर्थस्यास्य बुद्ध्यनारोहमाशङ्कमाना भगवती श्रुतिः कथमन्यत्र निश्शङ्का सती सुतरां बुद्ध्यनारूढं घटादिविकारमिथ्यात्वं दृष्टान्तत्वेनावष्टभ्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं समर्थयेतेति भवतैव पर्यालोचनीयमिति यत्किञ्चिदेतत् ।

आनन्दगिरीये—'इदानीं जगद्विशिष्टात्मप्रतिभासेन बाधानुपपत्त्या स्थितिकालं परित्यज्याग्रशब्देन प्राक्काल उपादीयते' इति दीपिकोक्तमनूद्य यद्दूषितम्, 'तथासत्यग्रपदवैयर्थ्यम् । आरोप्यप्रतीतिदशायामेव चोरस्थाणुरित्यादौ बाधदर्शनेनेहापि जगत्प्रतीतिदशायामेव बाधस्य न्याय्यत्वात् । सृष्टेः प्रागप्रतीतस्य बाधानुपपत्तेश्च । त्रैकालिकनिषेधस्यैव बाधरूपतया प्राक्काल एव निषेधे तस्य बाधरूपत्वासंभवाच्च । नहि पाकरक्ते घटे, पूर्वं न रक्तो घट इति प्रत्ययं बाधं मन्यन्ते । अतएव भाष्ये 'प्रागुत्पत्तेरव्याकृतनामरूपभेदात्मभूतं जगदासीदि'ति जगतः कारणात्मना सत्त्वोक्ता — न तु बाध' इति, तदस्माकमभिमतमेव । परन्तु कारणवाक्ये सामानाधिकरण्यस्य बाधार्थत्वं दूषितवतो भवतः का गतिरिति पृच्छामः । इदं पूर्वमात्मभूतमासीदित्युक्तौ एकस्मिन्वस्तुनि प्रपञ्चत्वमात्मत्वञ्च सिध्येत् । इत्थञ्च बाधार्थत्वे निषिध्यमाने प्रपञ्चात्मनोर्द्वयोरप्येकवस्तुत्वं, सत्यत्वमिथ्यात्वान्यतरच्चाश्रयणीयम् । एवं 'जगतः कारणात्मना सत्त्वोक्ते' त्यप्यसमञ्जसं त्वत्पक्षे,

**कालविशेषे सूक्ष्मरूपेण तत्सत्त्वमेव हि ततः प्रतीयते, कारणव्यतिरेकेण सत्ताऽभावश्च त्वया वक्तव्यः। स च बाधनिषेधे कथं लभ्येत।**

'सत्संस्थानमात्रमिदं सर्वमिति युक्तं प्रागुत्पत्तेस्सदेवेति ! ननु निष्कलं— इत्यादिश्रुतिभ्यः निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते ? नैष दोषः । रज्ज्वाद्यवयवेभ्यस्सर्पादिसंस्थानवत्, बुद्धिपरिकल्पितेभ्यस्सदवयवेभ्यो विकारसंस्थानोपपत्ते' (छा. ६ २) रिति भाष्यवाक्येन प्रदर्शितं सर्वमपि सामानाधिकरण्यमुपपन्नम्, बाधश्च सिध्यति । यथाऽल्पज्ञातेभ्यो रज्ज्वाद्यवयवेभ्य· स्सर्पादिसंस्थानमनिर्वाच्यमिष्टं, तथा श्रुतिजनितजगत्कारणत्वबुद्ध्यनुपपत्त्या कल्पितेभ्यस्सतो मायोपाधिकस्यावयवेभ्यो विकारसंस्थानमुपपद्यते । तस्मादयं द्वैतप्रपञ्चो ब्रह्मविवर्तस्संभवतीति तदर्थात्' **इति न वाच्यम्. एवमपि सामानाधिकरण्यानुपपत्तेः। उक्तभाष्यवाक्येन ब्रह्मणि परिकल्पितावयवपरिणामरूपत्वं जगत उक्तमुपलभ्यते । अयश्च वादो मायावाद एव पर्यवस्यति, जगतो मिथ्योपादानकत्वाविशेषात् । ततश्च जगदिदं मायाऽभूदिति निर्देशसंभवेपि ब्रह्माभूदिति निर्देशो न संभवति । दृष्टान्तोपन्यासश्चानुभवविरुद्धः । न हि लोके रज्ज्ववयवेभ्यः परिणतं सर्पसंस्थानं कोपि प्रतिपद्यते । अपितु दोषवशादयं रज्जुं सर्पतया भ्राम्यतीत्येव । नन्ववयवोपादानकत्वेप्यवयव ब्रह्मणोरभेदात्, ब्रह्मोपादानकत्वासिध्द्या सामानाधिकरण्योपपत्तिरिति चेन्न, कल्पिताकल्पितयोरभेदायोगात्। ततश्च कारणवाक्येपि जगद्ब्रह्मणोस्सामानाधिकरण्यं बाधार्थमेवाश्रयणीयं जगन्मिथ्यात्ववादिना । तच्च दूषितं तेनैवेति तन्मते न क्वापि गतिरिति ।**

**दीपिकोक्तार्थानुवादश्च यथावन्न कृतः,** 'नन्विदमात्मासीदिति सामानाधिकरण्येन जगद्वैशिष्ट्यमात्मनः प्रतीयते । नैवं, वैशिष्ट्ये सत्यग्रशब्दवैयर्थ्यप्रसङ्गात् । इदानीं जगद्विशिष्ट आत्मा प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य केवलमात्मानं वक्तुं प्राचीनकाल उपादीयते । तदेवमनेनाखण्डैकरसमात्मतत्त्वं सूचितं भवति । यदि तत्रापि जगदनुवर्तेत, इदानीं व्यर्थोऽग्रशब्दप्रयासस्स्यात् । सामानाधिकरण्यन्तु बाधायामप्युपपद्यते ' **इति तदीयो ग्रन्थः।**

अत्र अनुपपत्त्येत्यस्य जगद्विशिष्टत्वानुपपत्त्येत्यर्थः । न तु बाधानुपपत्त्येति; पूर्वापरानुगुण्यादित्यलम् ॥

दीपिकायां – 'यच्चास्य सन्ततो भाव ' इत्यंशस्य केवलात्मपरत्ववर्णनमपि विरुद्धम् । वाक्यत्रयवदस्याप्यात्मशब्दव्युत्पत्तिप्रदर्शकत्वेनाखण्डैकरसत्वाप्रतिपादकत्वात् । तत्र तिङन्तपदेनार्थविशेषः प्रदर्शितः । अत्र तु सुबन्तपदेनेतीयदेव हि वैषम्यम् । 'अस्य सन्ततो भावइत्यात्मनो धर्मिणस्सन्ततत्वविशिष्टभावरूपधर्म उच्यते । भावः स्वभावविशेषः । सन्ततः – परिच्छेदरहित ' इति 'अतति – सातत्येन सर्वत्र गच्छतीत्यात्मेति चतुर्थं निर्वचन ' मिति च भवतोक्तम् । अनेनापि सार्वकालिकं व्याप्तत्वमेवोक्तं भवति । इत्थञ्चाखण्डैकरसत्वेन सन्ततत्वं कथमात्मशब्दप्रवृत्तिनिमित्तं प्रतिज्ञायते॥ 'यौगिको वे' त्याद्यप्ययुक्तम् । यौगिकत्वेऽखण्डैकरसत्वासिद्धेः । तत्र रूढौ च न प्रमाणम् । 'इदमग्र आत्मैवासीत्, न तु तत्कार्यभूतं जगदासी ' दिति वाक्यार्थकथनमप्यसम्बद्धम् । इदम्पदार्थस्य कालविशेषे आत्मभिन्नत्वनिषेधस्य ततः प्रतीतेः । बाधार्थं सामानाधिकरण्यं तु व्याहतम् , लक्षणादिदुष्टञ्चेति पूर्वमेवोक्तम् । वैशब्दतात्पर्यवर्णनमपि नेष्टसाधकम् । आत्मनो बहुविधविशेषवत्त्वेपि तदानीं भवदुक्तरीत्यैव तदुभयाभावोपपत्तेः । 'जिह्वाऽभावेन मनोऽभावेन च शब्दप्रत्ययाभाव' इति खलु भवदुक्तिः । एवमेव, ' कालवाचकशब्दः परप्रसिध्द्ये ' त्यप्ययुक्तम् । न मिषत्—नासीदित्यर्थवर्णनमपि क्लिष्टम् । तस्मादस्य वाक्यस्य त्वदभिमताबोधकत्वात् अनेकप्रमाणानुसाराच्चैवमर्थो वर्णनीयः । स्थूलरूपमिदं जगत्सृष्टेः प्राक् तादृशात्माभिन्नमासीत्, तद्व्यतिरिक्तं किमपि तदानीं विभक्तनामरूपं नासीदिति । मिषत् विकसत् , विभक्तनामरूपमिति । यद्वा 'मिष स्पर्धाया ' मिति स्मृतेर्मिषत् – स्पर्धमानम् । ईदृशपरमात्मसदृशं वस्तु कालत्रयेपि नास्तीति । स्पर्धाशब्दस्तुल्यार्थे आलङ्कारिकैरिष्यते । तेनार्हति ब्रह्मणा स्पर्धितुं कः ' इति च श्रुतिः । अत्रेदम्पदं स्थूलशरीरकात्मपरम् ।

निर्विकारस्य स्वरूपेण परिणामासंभवात्। शरीरवाचकस्य शरीरिपर्यन्तत्वस्य स्थापितत्वात्। बाधार्थसामानाधिकरण्यविवर्तोपादानत्वयोरयोगाच्च । आत्मशब्दोऽपि, प्रधानस्यापि कारणत्वश्रवणात्, 'अयमात्मा सुखी, दुःखी' त्यादाविवार्थसामर्थ्यादेरोचितविशेषणविशिष्टपरत्वसंभवाच्च सूक्ष्मचिदचिद्विशिष्टपरः । इत्थञ्च युवाऽयमधिकज्ञानो देवदत्तः पूर्वमल्पज्ञानो बालोऽभूदितिवदयं निर्देशः । पक्षेऽस्मिन्न कोऽपि दोषः; सर्वप्रमाणानुगुण्यञ्चेति ॥

एवमुपरि– 'स इमाँल्लोकानसृजत' इति लोकानां सृज्यत्वश्रवणात्सत्यत्वमवसीयते । अवस्तुनस्स्रष्टुयसंभवात् । सर्गः, उत्पादनम्, उत्पत्त्यनुकूल उत्पादयितृगतो व्यापारः । उत्पत्तिश्चाद्यक्षणसम्बन्धः। ततश्चात्मनो लोकानामाद्यक्षणसम्बन्धकरत्वसिद्ध्या, लोकानां कालविशेषसम्बद्धत्वमवगतमिति सत्यत्वं दुर्निवारम्। कालसंबन्धस्य सत्यत्वव्याप्तत्वात् सत्यत्वरूपत्वाद्वा । अतस्त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं दुर्वचमेव यत्त्वत्र भाष्ये –'सोपादानस्तक्षादिः प्रासादादीन्सृजतीति युक्त,निरूपादानस्त्वात्मा कथं लोकान्सृजती'त्याशङ्क्य, मायैवोपादानमिति समाधायानन्तरं, आत्मैवोपादानं;माया तु सहायमात्रम् । परिणामो नाम विवर्तो वाऽन्यो नास्त्येवेत्यभिप्रायेण मायाविदृष्टान्तोपन्यासपूर्वकं अथवा सर्वज्ञो देवस्सर्वशक्तिर्महामाय आत्मानमेवात्मान्तरत्वेन जगद्रूपेण निर्मिमीत इति युक्ततर' मित्युक्तम् । तत्र विचार्यते, किमत्र निर्विशेषमुपादानमिति मतम्, उत सविशेष ईश्वर इति, आद्ये स्रष्टृत्वासंभवः, स्वाभाविकनित्यचैतन्येन कथं कादाचित्केक्षणमिति परैरेवोक्तत्वात्। सर्वज्ञत्वसर्वशक्तित्वादिकथनासाङ्गत्यञ्च । द्वितीये, सर्वज्ञत्वादेरपि ब्रह्मव्यतिरिक्तस्य जगत्तुल्ययोगक्षेमतया, तत्सृष्टं सोपादानं निरूपादानं वेति जिज्ञासायां, अनया दिशा निरुपादानत्वस्यैव वक्तव्यतया निरुपादानेन सर्वज्ञत्वादिसृष्टिवत् जगत्सृष्टेरप्युपपत्त्या सर्वज्ञत्वादीनां जगत्सृष्ट्युपयुक्तत्वेनोपन्यासासाङ्गत्यम्। सर्वज्ञत्वादिसृष्ट्यर्थं गुणान्तराङ्गीकारे तस्यापि जगत्तुल्यतया-

ऽनवस्था। ननु मायावदवस्तुभूतमनादि सर्वज्ञत्वादिकं जगत्सृष्ट्युपयुक्तं गुणजातमपि कारणदशायां विद्यत एवेति चेन्न-'नान्यत्किञ्चन मिष' दिति निषेधात्। मायाया इवैषामपि शक्तित्वमङ्गीकृत्यान्यविषये निषेधपरिपालने, श्रीविष्णुपुराणादौ शक्तिशब्देनोक्तस्य चेतनाऽचेतनप्रपञ्चस्य परमात्मापृथक्सिद्धप्रकारस्य सूक्ष्मावस्था सत्त्वमभ्युपगच्छद्भ्यः किमिति कुप्यसि।

एवमत्र (१ - ३) 'स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति। तस्मादिदन्द्रो नामे' ति श्रूयते। अत्र यस्माद्वैतरूपासक उपास्यं ब्रह्म 'इदमहमदर्शमि' ति साक्षात्कारानन्तरं व्यवहरति तस्मात्तद्ब्रह्म इदन्द्र इत्युच्यते। एवमपि 'इदं ब्रह्म ममात्मनस्स्वरूपमदर्श' मिति भाषणं स्वेच्छामूलम्; सः ब्रह्म अपश्यत्, इदमदर्शमिति स्फुटप्रतीतजीवपरभेदविरुद्धञ्च। एवं 'स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतस्समभव' दिति विदुषो वामदेवस्य मुक्तिरूपं फलं श्रूयते। अत्र यद्भाष्यं 'शरीरस्याविद्यापरिकल्पितस्य भेदात्, विनाशात्, ऊर्ध्वः परमात्मभूतस्सन्, अधोभावात्संसारादुत्क्रम्य ज्ञानावद्योतितामलसर्वात्मभावमापन्नस्सन्नमुष्मिन्, यथोक्तेऽजरेऽमरेऽमृते स्वर्गे लोके-स्वस्मिन्नात्मनि स्वे स्वरूपेऽमृतस्समभवदात्मज्ञानेन, पूर्वमाप्तकामतया जीवन्नेव सर्वान्कामानाप्त्वेत्यर्थ' इति, यच्च विवरणं 'ऊर्ध्वशब्दस्योपरितनवाचित्वात्, परमार्थवस्तुन एवं कदाचिदप्यधोभावरूपनिकर्षाभावेन निरङ्कुशोपरितनभावादूर्ध्वशब्दार्थत्व' मित्यादि, एतदुभयं भेदवादविद्वेषमूलमेव। शरीरभेदात्, उत्क्रम्य ऊर्ध्वं, अमुष्मिन्स्वर्गे लोके, सर्वान्कामानाप्त्वा, इत्येतेषु पदेषु निर्विशेषस्वात्मभावेनावस्थानं, पूर्वं जीवद्दशायां सर्वकामावाप्तिरित्येवंरूपार्थासंभवादिति॥

एवं तृतीयाध्याये - 'कोऽयमात्मेति वयमुपास्महे' इत्यत्र 'उपासनं नाम- उप सामीप्येन=ऐक्येन; तस्यैव निरुपचरितसामीप्यत्वात्। ऐक्येनापरोक्षीकृत्याऽऽसनं - तद्रूपेणावस्थान' मित्युपासनशब्दविवरणमानन्दगिरिकृत-

मपि मध्यस्थाः परामृशन्तु । तस्मादियमप्युपनिषदुपशमिताद्वैतेति सिद्धम् ॥ २० ॥

श्रीनृसिंहतापनीयोपनिषदपि, मन्त्रराज इति ख्यातस्य श्रीनृसिंह्मानुष्टुभस्य वर्णपदशक्तिबीजाङ्गमन्त्रचक्रस्थापनप्रकारादि, नृसिंहगायत्र्यादि, तत्तदधिकारिकामनानुसारेण तत्तदुपासनफलं, निष्कामस्य तेन मन्त्रेण श्रीनृसिंहमुपासीनस्य वैष्णवपरमपदप्राप्तिश्च फलं प्रतिपादयन्ती नारायणस्यैव पारम्यं जीवस्य ततस्स्वाभाविकभेदञ्चावगमयति । तथाहि – प्रजापतिं प्रक्रम्य ' स तपोऽतप्यत .... स एतं मन्त्रराजं नारसिंहमानुष्टुभमपश्यत् । तेन वै सर्वमिदमसृजत ' इत्यादि श्रूयते । मन्त्रराजेन साक्षात्कृतेन तत्प्रतिपाद्यनृसिंहमुपास्य तदनुगृहीतशक्तिस्सर्वं सृष्टवानित्यर्थः । अयमेव मन्त्रः पुनःपुनर्बहुभिः प्रकारैः प्रशंसितः । अत्र – ' सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति.... प्रणवं यदि जानीयात्स्त्रीशूद्रः, स मृतोऽधो गच्छति ' इति श्रवणात्, स्त्रीशूद्रयोः प्रणवाद्यधिकारो निषिद्धः । ततः ' ॐ उग्रं प्रथमस्याद्य ' मिति सामोद्धारादि क्रियते । 'क्षीरोदार्णवशायिनं नृकेसरिं योगिध्येयं परं पदं साम जानीयात्.... सोऽमृतत्वञ्च गच्छती' ति एवं रूपेण जानतस्तत्पदप्राप्तिः फलमुक्ता । एवमुपक्रमे क्षीरार्णवनिकेतनोपासनस्यैव मोक्षसाधनत्वकण्ठोक्त्या, ' विरूपाक्षं शङ्करं नीललोहितमुमापतिं पशुपतिं पिनाकिनं ह्यमितद्युति ' मित्युपरितनवाक्यस्यापि नारायणपरत्वमेव न्यायविद्भिरास्थेयम् । तत्रैव ' ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रह ' मिति पूर्वार्धेन तस्यैव प्रतिपादनाच्च ' नह्युमापतिर्नृसिंहरूपेणवततारेति लोकशास्त्रप्रसिद्धिः । लक्ष्मीनृसिंह इति च प्रसिद्धतरं नाम । सत्यब्रह्मपुरुषपदानि तत्रैव मुख्यवृत्तानीत्यपि पूर्वमेवोक्तम् । ततश्च, विशिष्टं सर्वोत्कृष्टं रूपं ययोस्ते अक्षिणी अस्येति विरूपाक्षः पुण्डरीकाक्षः । यद्वा ' तस्य चिन्तयतो नेत्रात्तेजस्समभवन्महत् । दक्षिणं वह्निसंकाशं वामं तुहिनसन्निभ ' मिति वाराहवचनाच्छीतत्वोष्णत्वाभ्यां मिथोविलक्षणनेत्रद्वयः । शं – सुखं करोतीति

शङ्करः । नीललोहितः 'नानावर्णाकृतीनि चे 'त्याद्युक्तरीत्याऽनेकवर्णाप्राकृतविग्रहः। उमापत्यादिपदत्रयं तद्वाच्यरुद्रशरीरकपरमात्मपरम् । एतन्मन्त्रराजघटकतत्तत्पदविवरणरूपे मन्त्रराजपदस्तोत्रे उमापतिनैव स्वस्य 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः। अतोऽहमपि ते दास इति मत्वा नमाम्यह' मिति स्वाभाविकनृसिंहदासत्वोस्योक्तत्वात् । अत्रैकेनैव रुद्रशरीरकत्वसिद्धौ पदत्रयोपादानं रुद्रविशेषणस्योमापतित्वादेरपि तत्सङ्ख्यायत्तत्वसूचनाय । 'तस्माद्यो मृत्योः पाप्मभ्यस्संसाराच्च बिभीयात्स एवं मन्त्रराजं नारसिंहमानुष्टुभं प्रतिगृह्णीया'दिति श्रवणाद्वक्ष्यमाणं विष्णुपदप्राप्तिरूपं फलं मुख्यमुक्तिरूपमेवेत्युपेयम् । तच्च फलं पूर्वतापनीयान्त एवं श्रूयते — तद्वा एतत्परमं धाम मन्त्रराजाध्यायकस्य, यत्र सूर्यो न तपति यत्र न वायुर्वाति .... यत्र न दुःखं, सदानन्दं परमानन्दं शाश्वतं शान्तं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं यत्र गत्वा न निवर्तन्ते योगिनः, तदेतदृचाभ्युक्तम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः .... विष्णोर्यत्परमं पदमिति ॥ तदेतन्निष्कामस्य भवती ' ति ॥ यत्र परमे पदे सूर्यादयस्स्वकार्यं कर्तुं न शक्नुवन्ति, यत्र दुःखगन्धोपि न विद्यते तत्परमंधामेत्यन्वयः । प्रथमान्तत्वेऽस्तीत्यध्याहारः । सदानन्दमित्यादि गत्वेत्यत्रान्वेति । सदैकरूपेण अन्येच्छानधीनतया वा सन्नानन्दो यस्य तत् ; तस्यानन्दस्य पारम्यमाह परमानन्दमिति । परमात्मनस्सर्वदाऽप्रच्युतस्वभावत्वमाह शाश्वतमिति। शान्तं—अशनायादिसर्वहेयशून्यं । सदाशिवं – सदामङ्गलकरं मङ्गलास्पदञ्च । ब्रह्मादीत्यादिना रुद्रेन्द्रादयो गृह्यन्ते। अत्रपरमंधामेत्युपक्रमात् , यत्रेति निर्देशाच्चास्य गन्तव्यदेशपरत्वं व्यक्तम् । तद्विष्णोरित्यादि— यद्विष्णोः परमं पदं, तद्विष्णोः परमं पदं सूरयस्सदा पश्यन्तीत्यन्वयः । दिवीवेति- द्यौः परमाकाशः । इवशब्द एवार्थः । चक्षुःपदं 'चक्षुर्देवानामुत मर्त्याना ' मिति श्रुतेर्भगवत्परम् ; सूर्यनेत्रपरं वा । भगवत्परत्वे अप्राकृतलोक एव स परवासुदेवादिरूपविशिष्टत्वेन सुप्रतिष्ठित इत्यर्थः । नेत्रपरत्वे परमपद एव सूरीणां

चक्षुर्वद्धादरमिति पश्यन्तीत्युक्तदर्शनं विशेष्यते। तदित्यादि वाक्यान्तरम्। तदिति षष्ठ्यर्थे द्वितीया। विप्रासः मेधाविनः। तद्विपन्यवः परमपदविषयकस्तुतिशीलाः जागृवांसः अस्खलितज्ञानाः। समिन्धते सम्यन्तात्प्रकाशन्त इति। अनेन द्रष्टृत्वेनोक्तास्सूरय एव मेधावित्वादिना विशेष्यन्ते। मेधाविस्तुतिशीलास्खलितज्ञानानेकनित्यसूरिदृश्यपरमपदाख्यस्थानविशेषविधिपरमिदं वाक्यम्। सर्वेषामप्यप्राप्तत्वादिति।

यत्वत्र व्याख्यानं— 'यत्परमं पदमित्यत्र यच्छब्देन क्षीरोदार्णवः परामृश्यते। सूरयः — उपासकाः। तादात्म्येनोपासनं विवक्षितञ्चेत् सायुज्यं फलम्। ततश्च विष्णुरेव परमं पदम्। विष्णोरिति षष्ठी शिलापुत्रकस्य शरीरमिति वद्रष्टव्या। विप्रासः ब्राह्मणाः, विपन्यवः — मेधाविनः, समाधौ धारणशक्तियुक्ताः जागृवांसः—जागरितावस्थायामेव अवस्थात्रयात्प्रच्युत्य समिन्धते,समृद्धिं कुर्वन्तीत्यादि। तदसङ्गतम्। 'क्षयन्तमस्य रजसःपराके', 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्', 'यो वेद निहितं गुहायां परमे व्योमन्', योऽस्याध्यक्षः परमे व्योमन्', 'तदक्षरे परमे व्योमन्', 'आदित्यवर्णं तमसः परस्तादि' त्याद्यनुसारेण त्रिगुणात्मकप्राकृतप्रपञ्चादूर्ध्वभूताप्राकृतपरब्रह्मवासस्थानविशेषपरत्वात्। रजश्शब्देन तद्गुणा प्रकृतिरुच्यते। गुणभूतस्य रजसस्स्वातन्त्र्येणावस्थानायोगात्। इमां प्रकृतिमतिक्रम्य स्थिते स्थाने क्षयन्तं वसन्तमिति क्षयन्तमित्यादेरर्थः। एवं तमसः परस्तादित्यत्रापि। ततश्च तादृशसूरिविशिष्टस्थानप्राप्तेर्नृसिंहोपासनफलत्वावगमात्तत्रोपासनाप्रस्तावस्यासाङ्गत्यादुपासकपरत्वेन सूरिपदादिविवरणमनुपपन्नम्। 'कालं स पचते तत्र न कालस्तत्र वै प्रभु' रित्यकालकाल्यत्वं स्थानविशेषस्य श्रूयत इति कालस्य स्थानविशेषविषयेऽकार्यकरत्वमुक्तम्। तद्वदत्र स्थानविशेषे सूर्यवाय्वादीनामकार्यकरत्वमुच्यत इति च सुसङ्गतम्। यत्रेति यच्छब्दस्य क्षीरार्णवपरत्वे 'सूर्यो न तपती' त्यादीनामसाङ्गत्यम्; तस्यापि प्रकृतिमण्डलान्तर्गतत्वेन सूर्याद्यधीनकार्याणामवर्जनीयत्वात्। इत्थञ्च — 'विष्णोरिति षष्ठी शिलापुत्रकस्येतिवदित्यादि

निरस्तम् । स्वरसार्थग्रहणे बाधकाभावाच्च । तत्सिद्धं नृसिंहतापनीयोपनिषदपि न परानुकूलेति ।

या पुनरुत्तरतापनीयेत्युपनिषन्मन्यते, साप्यत्र विचार्यते। तत्रापि बहुभिः प्रकारैः प्रणवं, नृसिंहानुष्टुबन्तर्गतानि पदानि च प्रशस्य, प्रकृतिशरीरको नृसिंह एव जगदुपादानकारणमिति वटबीजदृष्टान्तेनोपक्षिप्य अनुष्टुभा तदुपासननिष्ठा ईषणात्रयविनिर्मुक्तास्संसारान्मुच्यन्त इति प्रतिपाद्यते । तत्रतत्र नानाप्रकारया वचनशैल्या जीवानां परामात्मनश्च ज्ञानत्वानन्दत्वादिरूपेण परमसाम्यं, प्रपञ्चस्य स्वनिष्ठत्वरूपस्वातन्त्र्याभावः, जीवानामनादिकर्ममूलप्रकृतिसंसर्गवशेन संकुचितज्ञानत्वादिकञ्चोच्यते ।तथाहि — उपक्रम एव 'सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्मे' ति श्रूयते । एतत्सर्वमचेतनरूपं जगत् ब्रह्म, अयं जीवात्मा च ब्रह्मेति तदर्थः । अत्र सामानाधिकरण्यं न स्वरूपैक्यनिबन्धनम् । हिशब्दश्श्रुत्यन्तरे सामानाधिकरण्यनिर्देशहेतुत्वेनोक्तस्य तज्जत्वतल्लत्वतदनत्वादेरत्रापि तद्धेतुत्वं सूचयति । अत्र सर्वपदमात्मनः पृथगुक्त्या गोबलीवर्दन्यायादचेतनमात्रपरम् । ततश्च चेतनाचेतनात्मकस्सर्वोऽपि प्रपञ्चः ब्रह्मशरीरभूतः ब्रह्मकार्यभूतश्चेति पर्यवसितार्थः । एवंजातीयकं सर्वमप्यत्र वाक्यजातमेवमेव योजनीयम् । जीवपरयोरचेतनब्रह्मणोश्च सामानाधिकरण्यं स्वाभाविकभेदे सत्येव परमात्मनोऽन्तर्यामित्वेन व्याप्तिकृतमिति 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादिभिरुपपादितम् । यत्त्वत्र व्याख्यानं 'हिशब्देन तत्राध्यस्तत्वलक्षणो हेतुस्सूचित'इति – तन्न, श्रुतावेव तज्जलान्, सन्मूला इति निर्दिष्टे हेतौ जाग्रति, स्वेच्छाकल्पितस्याध्यस्तत्वस्य हेतुत्वायोगात् ।

यत्त्वत्र चतुर्थपादनिरूपणावसरे — 'नस्थूलप्रज्ञं नसूक्ष्मप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञं नाप्रज्ञं नप्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्त' इति श्रूयते, तदपि न परानुकूलम् । भिन्नभिन्नार्थकानेकपदप्रयोगादेव ब्रह्मसविशे-

षत्वस्य दुर्वारत्वात् । तावतामप्येकार्थत्वे वैयर्थ्याच्च । 'स एवात्मा स विज्ञेय' इति सर्वव्यापित्वविज्ञेयत्वोक्तेश्च । तुरीयं सर्वात्मना निर्विशेषमिति हि तन्मतम् ।

तथापि पदार्थः क इति चेदुच्यते । अत्रानिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवरूपाश्चत्वारो व्यूहाः क्रमेण जागरितस्वप्नसुषुप्ततुरीयस्थानरूपपादचतुष्टयत्वेन प्रतिपाद्यन्ते । नास्थूलप्रज्ञमित्यनेन प्रथमपादरूपविश्वो व्यावर्त्यते । स्थूले—बहिर्भूते रूपादौ, प्रज्ञा येनेति स्थूलप्रज्ञम् । रूपादिविषयकज्ञानप्रयोजकमित्यर्थः । नशब्देन समासः । एवमुपर्यपि । तादृशज्ञानप्रयोजकानिरुद्धभिन्नमित्यर्थः । अनिरुद्धस्य निरुक्तज्ञानप्रयोजकत्वं प्रमाणसिद्धम् । 'नसूक्ष्मप्रज्ञ' मिति द्वितीयपादरूपतैजसव्यावृत्तिः । स्वाप्नपदार्थविषयकानुभवप्रयोजकप्रद्युम्नभिन्नमित्यर्थः । नोभयतःप्रज्ञमिति बाह्यज्ञानतत्समकालिकान्तरज्ञानैतदुभयप्रयोजकत्वं व्यावर्त्यते । नप्रज्ञमिति तृतीयपादरूपप्राज्ञव्यावृत्तिः । तृतीयपादपरवाक्यस्थप्राज्ञपदस्य प्रज्ञ एव प्राज्ञ इतिस्वार्थाण्णन्तत्वेन प्रज्ञप्राज्ञशब्दयोरेकार्थत्वात् । तस्यैव विवरणं 'नप्रज्ञानघन'मिति । ननु प्रज्ञभिन्नत्वेऽज्ञत्वप्रसङ्ग इत्यत्राह— नाप्रज्ञमिति । ज्ञानानाश्रयभिन्नमित्यर्थः । नप्रज्ञमिति न ज्ञानाश्रयत्वं निषिध्यते, किन्तु ज्ञानप्रधानकसङ्कर्षणाभिन्नत्वमुच्यत इति भावः । अदृष्टं बाह्येन्द्रियज्ञानागोचरम् । अव्यहार्यमग्राह्यं वाग्घस्तादिकर्मेन्द्रियागोचरम्, अत एवालक्षणमनुमानागम्यम्, अत एवाचिन्त्यमव्यपदेश्यम् – इदमीदृगिति चिन्ताव्यपदेशानर्हम् । तर्हि निर्विशेषत्वं ज्ञानाविषयत्वञ्च स्यादित्यत्राह — एकात्मप्रत्ययसारमिति । एकः आत्मेति प्रत्ययविषयीभूतमित्यर्थः । समाभ्यधिकराहित्यसर्वान्तर्यामित्वादिविशेषजातं ज्ञानगोचरत्वञ्च विद्यत इति न तदुभयप्रसङ्ग इति भावः । प्रपञ्चोपशमं – प्रपञ्चस्योपशमो लयो यस्मिंस्तम् । सर्वप्रपञ्चलयाधारत्वेन तत्कारणभूतमिति यावत् । शिवं मङ्गलम् । शान्तमूर्मिषट्करहितम् । अद्वैतं प्रपञ्चप्रतियोगिकतादा-

त्म्यासहभेदरहितम् । शरीरादात्मन इव प्रपञ्चात्परमात्मनस्स्वाभाविकभेदसत्त्वेपि प्रपञ्चः परमात्मेत्यबाधितसामानाधिकरण्यस्यापि प्रमाणयुक्तिबलादुपपन्नत्वेन घटपटादिवदात्यन्तिकभेदरहितमिति यावत् । एतादृशं वासुदेवं चतुर्थं पादं मन्यन्त इति । स आत्मेति — ईदृशो वासुदेवस्सर्वदेशसर्वकालसर्ववस्तुव्याप्तत्वात्सर्वस्याप्यात्मेत्यर्थः । स विज्ञेयः — स एव मुमुक्षुभिर्विशेषेण ज्ञेय इत्यर्थः । अत्र स आत्मा स विज्ञेय इत्यनेन 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथे' ति श्रुत्यर्थः प्रत्यभिज्ञाप्यत इति ।

यत्त्ववतरणम् — 'एवं तुरीयपादत्रयस्य मिथ्यात्वमभिधाय पारमार्थिकं तुरीयस्य चतुर्थं रूपं निर्विशेषमिति विशेषप्रतिषेधमुखेनैवोपदेष्टुं शक्यत इत्याहे' ति — तद्व्याहतम् ; निर्विशेषस्य शब्दबोध्यत्वासंभवेन तदनूद्य तस्मिन्विशेषनिषेधस्य कर्तुमशक्यत्वात् । अनुवादे शब्दवाच्यत्वरूपविशेषस्य दुर्वारत्वात् । अन्यत्र तन्निषेधे ब्रह्मणस्तत्त्वासिद्धेः । विशेषराहित्यरूपधर्मप्रसङ्गाच्च । तद्ब्रह्मरूपमिति तु पूर्वमेव निरस्तम् । यदपि — 'नप्रज्ञमिति सामान्यज्ञानस्य निषेधः ; नाप्रज्ञमित्यचेतनत्वस्ये' त्युक्तम्, तदपि न, व्याघातात् । अचेतनं, नाचेतनमिति हि तदा फलति । चैतन्यरूपस्यात्मनो घटादिवदचेतनत्वेन तन्निषेधानुपपत्तिश्चेति ।

यदपि — एकात्मप्रत्ययसारमित्यस्य व्याख्यानं 'जाग्रदादिष्वेकोऽयमात्मेत्यव्यभिचारी सर्वप्राणिनां सूक्ष्मस्स्वाभाविकोऽकृत्रिमःप्रत्ययस्सततोदितः, तेन सारं— सरणीयं, तत्साधकत्वेन तद्विषयतयाऽनुसरणीयं तत्प्रमाणकमित्यर्थ' इति — तदपि न; जाग्रदादिदशासु सर्वप्राणिनां सततं तादृशप्रत्ययोदयस्यानुपलब्धिपराहतत्वात् । न हि जाग्रद्दशायामपि दाशकितवादीनां तादृशप्रत्यय उपलभ्यते । सुषुप्त्यवस्थायां स नोदेतुमर्हति, तथा सति सुषुप्तेरेव विलयप्रसङ्गात् । किञ्च स प्रत्ययो ब्रह्मरूपोऽतिरिक्तो वा । आद्ये, तत्प्रमाणकत्वोक्तिरसङ्गता । स्वस्य स्वं प्रति प्रमाणत्वायोगात् । अन्यपदार्थाभावेन बहुव्रीह्यसंभवाच्च । द्वितीये तस्य स्वा-

भाविकत्वाकृत्रिमत्वोक्तिविरोधः । अध्यस्ते तयोरसंभवात् । ज्ञेयत्वापत्त्या जडत्वादिप्रसङ्गाच्च । नहि प्रत्यक्षप्रमाणको घट इत्युक्तौ प्रात्यक्षिकप्रमितिविषयत्वं घटस्य नास्तीति प्रतिज्ञातुं शक्यमिति ।

'ईश्वरग्रासस्तुरीयतुरीय' इत्यस्य, ग्रसतीति ग्रासः । ईश्वरश्चासौ ग्रासश्चेति कर्मधारयः । सर्वसंहारकस्सर्वेश्वर इत्यर्थः । यत्त्वत्र ईश्वरस्यापि संहारक इति विवरणं, तत्, परब्रह्मेश्वरयोर्भेदस्याप्रामाणिकत्वात्, निर्विशेषशुद्धचैतन्यस्य संहारकत्वायोगाच्चोपेक्ष्यम् । एतेन — 'यस्मात्तुरीयतुरीय ईश्वरमपि ग्रसति तस्मात्तस्यैवात्मशब्दयोग्यता, तस्मात्स एवात्मा, तस्मात्स एव विज्ञेयः, तदनुभवार्थमेव प्रयत्नोऽनुष्ठेय इत्यर्थ' इति निगमनमपि निरस्तम् ; निर्विशेषस्य ग्रसितृत्वायोगात्, ईश्वरग्रसितृत्वस्यात्मशब्दयोग्यत्वाप्रयोजकत्वाच्च । सर्वव्यापित्वं खल्वात्मशब्दार्थः । तस्य निर्विशेषे रूढिस्तु प्रमाणाभावादिना पूर्वमेव निरस्ता । तदनुभवार्थमित्याद्यपि तन्मतविरुद्धम् । नह्यस्मन्मत इव ब्रह्मानुभवत्याधिकारी तन्मते, अपितु ब्रह्मैव भवतीति ।

किं बहुना — पञ्चमवेदे श्रीमहाभारते सर्वज्ञरुद्रकर्तृके श्रीमन्त्रराजपदस्तोत्रे सर्वसंप्रतिपन्ने प्रकृतमन्त्रघटकाहंपदार्थविवरणरूपे 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः । अतोहमपि ते दास इति मत्वा नमाम्यह'मिति श्लोके स्वतो जीवबहुत्वं तेषां सर्वेषामपि जीवानां स्वाभाविकभगवद्दासत्वञ्च सुव्यक्तमुच्यते । ततश्चैतदुपनिषत्प्रधानप्रतिपाद्यमन्त्रविवरणरूपस्पष्टार्थकस्मृत्यनुसारेणैवास्पष्टार्थकैतदुपनिषदर्थो वर्णनीय इति नास्यां जीवपरैक्य — ब्रह्मनैर्गुण्यादिशङ्कावकाशलेशोपीति ध्येयम् । अन्यथा 'आत्मप्रकाशं शून्यं' अनन्तं तुच्छमिद'मिति शून्यतुच्छपदश्रवणान्माध्यमिकविजयप्रसङ्गः ।

अत्र 'ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च ससाधनेभ्यो व्युत्थाय निरगारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमाना' इत्यादि दृश्यते । अत्र अशिखा अयज्ञोपवीता

इत्येतत्, अनुदरा कन्येतिवन्नेतव्यम् । तथाचाधिकपरिमाणशिखया अधिकसंख्याकस्य यज्ञोपवीतस्य च यतीनां निषेधः क्रियते । यद्वा शिखायज्ञोपवीतपदं तद्विषयकादरपरम् । शास्त्रीयकर्मौपायिकत्वाकारातिरेकेण शोधनसंस्करणादिना शिखायज्ञोपवीतादावप्यत्यादरो न कर्तव्य इति भावः । न तु शिखायज्ञोपवीतराहित्यमुच्यते; 'अथ ह यद्ब्रह्म सनातनं ये श्रोत्रिया अकामहता अधीयु .... परमहंसमाश्रमं संप्रविश्य यथोपपत्ति पञ्चमात्रां दधानः । तदत्र श्लोकौ भवतः — त्रिदण्डमुपनीतञ्च वासःकौपीनवेष्टनम् । शिक्यं कवचमित्येतद्बिभृयाद्यावदायुष' मित्यादिश्रुत्या, 'परमहंसा नाम त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतिनोऽन्तर्वासबहिर्वासधारिणो ग्रामैकरात्रवासिनः— सन्ध्योपासनतत्परा नित्यं वृक्षमूले वसन्त आत्मानं मोक्षयन्त' इत्यादिस्मृत्या च परमहंसानामपि यज्ञोपवीतसिद्ध्या तदयोगात् । तेषां शिखाया अपि 'पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः', 'कक्षोपस्थशिखावर्जं मुण्डयेत शिरो यति' रित्यादियतिसामान्यविषयकस्मृत्या, 'चतुर्विधानामपि यतीनां न लिङ्गभेदः, अपितु वृत्तिभेद एवेत्यर्थप्रतिपादिकाभ्यां', 'सर्वे विष्णुलिङ्गिनः', 'चतुर्विधा भिक्षवस्तु स्मृतास्सामान्यलिङ्गिनः । तेषां पृथक्पृथङ्नाम वृत्तिभेदात्कृतं श्रुता' वित्यादिश्रुतिस्मृतिभ्याञ्च सिद्धेः । नच वाच्यमुपात्तवाक्यस्य स्वरसार्थपरत्वमाश्रित्य विकल्प एवेष्यतामिति । अष्टदोषदुष्टविकल्पानङ्गीकारेणोक्तप्रकारेणैव निर्वाहोपपत्तौ तदयोगात् । यद्वा 'उन्मत्ता इवे' त्यत्रत्येवशब्दस्यान्धशब्दादिनेवाशिखायज्ञोपवीतशब्दाभ्यामप्यन्वयोऽङ्गीक्रियते । अथवा शिखायज्ञोपवीतरहिताः उन्मत्तविशेषा इव परिवर्तेरन्नित्यर्थात्, अशिखायज्ञोपवीतपदे उन्मत्तविशेषणे ।

एवमेतावता वाक्यमिदमप्रक्षिप्तं प्रमाणमिति कृत्वा प्रमाणान्तराविरोधेन योजितम् । वस्तुतस्तु वाक्यमिदं, अन्यानि च कानिचिदत्रत्यानि, यद्वा इयमुत्तरतापनीयोपनिषदेव सम्पूर्णा प्रक्षिप्तैवेति मन्यामहे ; श्रीशङ्कराचार्यैरव्याख्यातत्वात् । नह्येकत्र प्रथमांशं व्याख्याय अंशान्तराव्याख्याने युक्तिमुत्पश्यामः । विद्यारण्यव्याख्यातत्वन्तु नाप्रक्षिप्तत्वं

गमयेत् ; तदभिप्रायपद्धतेस्सूतसंहिताप्रस्तावे परपक्षनिराकृतौ (७९ पु.) स्पष्टं प्रदर्शितत्वात् । किञ्च – अशिखा अयज्ञोपवीता इत्येतत्सत्त्वे परैः किमित्येतदनुपादायैव प्रयासेन परमहंसानां शिखायज्ञोपवीतत्यागस्समर्थितः ; स्पष्टार्थकवचनसद्भावे, 'परमहंसमेवाधिकृत्य काचिच्छ्रुतिस्स्मृतिर्वा ब्रह्मसूत्रपरित्यागं यदि विदधीत, तदा पूर्वोक्तश्रुतिस्मृत्यादिकं यथाकथञ्चिद्योजनीय' मिति भवत्पक्षस्योक्तेरसम्भवात् । 'तापनीयरहस्यानां सारः कामासिकाहरि' रित्यनुगृह्णद्भिस्सर्वज्ञशेखरैराप्ततमैराचार्यैः 'काचित्कैश्चिदप्यनधीयमानां.... त्वत्पक्षं विस्तरेण प्रतिक्षिपद्भिः — उद्धृत्यापरिहृतामन्यांदर्शी श्रुतिं द्रष्टुमिच्छसी' ति तदुत्तरदानायोगाच्च । शिखात्यागविषये 'परमहंसस्य शिखावर्जनमप्यनुपपन्नम् । चतुर्णामपि लिङ्गभेदनिषेधस्य दर्शितत्वात् विशेषविधायकासिद्धे' रित्यन्वग्राहि । अत्र विशेषविधायकासिद्धेरित्येतत् अशिखा इत्यस्य प्रक्षिप्तत्वं सुदृढमवगमयति । तस्मात् परैस्स्वाभिमतार्थसाधकतया कुत्राप्यनुपादानात् सर्वज्ञैरस्मत्पूर्वाचार्यैरुद्धृत्यापरिहृतत्वाच्च तुल्ययोगक्षेमः प्रमाणान्तरविरुद्धस्सर्वांशः, उत्तरांशस्सर्वोपि वा प्रक्षिप्त एवेति सिद्धम् । ततश्चेयमप्युपनिषत् जीवपरभेदजगत्सत्यत्वादिकमेव प्रतिपादयतीति स्थितम् ॥ २१ ॥

एवमियता प्रबन्धेन ईशावास्योपक्रमासु श्रीनृसिंहतापनीयान्तास्वेककण्ठासूपनिषत्सु परब्रह्मभूतःपुरुषोत्तमश्श्रीमान्नारायण एव चिदचिदात्मकसमस्तजगदुपादानकारणं निमित्तकारणञ्च; जगदपि सर्वावस्थासु तदपृथक्सिद्धं तच्छरीरं सत्यं, जीवपरमात्मानौ स्वाभाविकपरस्परभेदौ, जीवाश्च स्वाभाविकपरस्परभेदा अनन्ता अणवः, भगवतस्सर्वज्ञत्वादिकल्याणगुणगणाश्च स्वाभाविकाः; स च सर्वदा सर्वविधदोषगन्धरहितः; भगवन्निग्रहानुग्रहात्मकपुण्यपापरूपानादिकर्मवशाज्जीवस्य सुखदुःखानुभवतद्धेतुभूतशरीरसम्बन्धादिरूपस्संसारः, ईदृशसंसारात्यन्तिकनिवृत्ति हेतुरुपासनध्यानादिशब्दवाच्यस्स्वाभाविककल्याणगुणाकरभगवद्विषयकस्साक्षात्कारतुल्यो विधेयस्स्मृतिसन्तान-

रूपो ज्ञानविशेषः; प्रारब्धकर्मावसाने शरीरादुत्क्रान्तस्यैव साक्षान्मुक्तिः सा च स्वाभाविकज्ञानविकास – गुणाष्टकाविर्भाव–सर्वप्रकारविशिष्टपरब्रह्मानुभव–तज्जनितानवधिकातिशयप्रीतिकारितबहुविधकैङ्कर्यरूपेति इमेऽशास्सुस्पष्टं प्रतिपाद्यन्त इत्युपपादितम्। अथेदानीमस्मिन्नधिकारे कतिपयोपनिषद्गतानि प्रपञ्चनिषेधकानीवापाततो भासमानानि कानिचिद्वाक्यानि न पराभिमतप्रपञ्चबाधादिकं प्रतिपादयितुं शक्नुवन्तीत्ययमंशः प्रतिपाद्यते ।

तत्रेयमाशङ्का 'यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः। तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥' इतीशावास्ये श्रूयते । यस्मिन्काले आत्मनि वा, सर्वाणि भूतानि – आत्मैकत्वं विशुद्धं गगनोपमं पश्यत आत्मैव संवृत्तः । तस्मिन्काले आत्मनि वा — कश्शोकः को मोह इति तदर्थः । अत्रात्मैकत्वज्ञानस्य शोकमोहनिवृत्तिहेतुत्वमुच्यते । सर्वभूतप्रतिभासोऽज्ञानकार्य इति च प्रतीयते । तथा कठोपनिषदि, 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥ मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यती' ति श्रूयते । यदेवेह संसारधर्मवदवभासमानमविवेकिनां, तदेव – स्वात्मस्थममुत्र नित्यविज्ञानघनस्वभावं सर्वसंसारधर्मवर्जितं ब्रह्म । यच्चामुत्राऽस्मिन्नात्मनि स्थितं, तदन्विह – तदेवेह नामरूपकार्यकारणोपाधिमनुभाव्यमानं नान्यत् । एवं सति योऽविद्यया मोहितस्सन् इह ब्रह्मण्यनानाभूते परस्मादन्योहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यति, स मरणान्मरणं – पुनः पुनर्जन्ममरणभावमाप्नोतीति प्रथममन्त्रार्थः । आचार्यागमसंस्कृतेन मनसैवेदं ब्रह्म एकरसमाप्तव्यम् । आत्मैव नान्यदस्तीति । आप्ते चाविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति । किञ्चन — अणुमात्रमपि । यस्त्वविद्यातिमिरदृष्टिं न मुञ्चति, इह ब्रह्मणि नानेव पश्यति, स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्निति द्वितीयमन्त्रार्थः । अत्रापि जीवपरैक्यं ब्रह्मव्यतिरिक्त-

मिथ्यात्वञ्च प्रतीयते । तथा बृहदारण्यके 'यत्र हि द्वैतमिव भवति, तदितर इतरं जिघ्रति, तदितर इतरं पश्यति.... यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन कं जिघ्रे' दित्यादि श्रूयते । यत्र — अविद्याकल्पिते विशेषात्मनि सति, हि-यस्मात्, परमार्थतोऽद्वैते ब्रह्मणि, द्वैतमिव — भिन्नमिव वस्त्वन्तरमात्मन उपलक्ष्यते । तस्मात् तत् — तस्मिन्सति इतर इतरं जिघ्रति यत्र वाऽस्य ब्रह्मविदस्सर्वमात्मन्येव प्रविलापितमात्मैव संवृत्तं, तत् तत्र केन करणेन कं घ्रातव्यं को जिघ्रेदिति तदर्थः । अत्रापि ब्रह्मव्यतिरिक्तवस्त्वभावस्स्फुटं प्रतिपाद्यते । तथोत्तरत्र 'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यती' ति । मनसैव द्रष्टव्यम् – केवलं मनो ब्रह्माविषयीकुर्वदपि श्रवणादिसंस्कृतं तदाकारं जायते । तेन द्रष्टव्यं तदुच्यत इति । अत्रापि प्रपञ्चनिषेधस्स्फुटः । तथा छान्दोग्ये 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति । इदं सर्वं ऐतदात्म्यं — एतत् – सत् आत्मा यस्य सर्वस्य, तदेतदात्म । तस्य भाव ऐतदात्म्यम् । एतेन सदाख्येनात्मनात्मवत्सर्वमिदं जगत् । नान्योऽस्त्यस्यात्मा संसारी । तदेव सदाख्यं कारणं सत्यं परमार्थसत् । अतस्सएवात्मा जगतः प्रत्यक्स्वरूपं याथात्म्यम् । आत्मशब्दो निरुपपदः प्रत्यगात्मनि निरूढः । अतः हे श्वेतकेतो, तत् सत् त्वमसीति तदर्थः । अत्रापि जीवपरैक्यं प्रस्फुटम् । सुबालोपनिषदि 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते, ब्रह्मैव सन्ब्रह्माप्येती' ति । अत्र विदुषश्शरीरादुत्क्रान्तिनिषेधाज्जीवन्मुक्तिरुक्ता भवति । ब्रह्मभाव एव मुक्तिरिति च प्रतीयते । एवञ्जातीयकानि ब्रह्मव्यतिरिक्तसर्वप्रपञ्चनिषेध–जीवैक्य – जीवन्मुक्त्यादिप्रतिपादकानि वाक्यान्तराण्यपि बहूनि द्रष्टव्यानि । ततश्च पूर्वोक्तरीत्या प्रमेयनिष्कर्षेऽनन्यथासिद्धानामेतेषां वाक्यानां सर्वात्मनाऽप्रामाण्यप्रसङ्गेनैतदनुरोधेन तेषामेवान्यपरत्वमाश्रयणीयम् । इत्थञ्च तत्तत्प्रकरणस्वारस्याद्यानुगुण्येन केषाञ्चिदध्यारोपापवादन्यायेन निषेधार्थं प्रपञ्चानुवादकत्वं, केषाञ्चिदर्वाचीनतत्तत्फल-

सिद्धय आरोपितगुणविशिष्टावरब्रह्मोपासनविधिपरत्वञ्च युक्तमाश्रयितुम् । निषेधवाक्यानां बलीयस्त्वात्तदान्यपर्यं न शङ्कितुमपि शक्यम् । तस्माद्ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वादिकमेवोपानिषदामन्यथासिद्धवाक्यानुगुणमिति प्रमाणशरणैरुररीकार्यमिति ॥

अत्रोच्यते । उक्तवाक्यानां पराभिमतार्थपरत्वं न सम्भवति । यद्व्याख्यानमात्मैकत्वपरतया 'यस्मिन्सर्वाणि' त्यादेः, तदसङ्गतम् । प्रत्यक्षेण बाधगन्धविधुरतया प्रतीयमानस्याचेतनप्रपञ्चस्य सामानाधिकरण्येन बाधकल्पनाऽयोगात् । सामानाधिकरण्येन बाधासिद्धेश्च । तेन प्रपञ्चरूपत्वमेव ब्रह्मणस्सिद्ध्येत् । तद्बाधितमिति चेत्, तर्ह्यबाधितोऽर्थ आश्रीयताम्॥ भूतपदं भूतत्वप्रकारकभ्रमविशेष्ये लाक्षणिकं । यत् तादृशभ्रमविशेष्यं, तत् आत्मैवेत्यर्थ इति चेत्–लक्षणैव दोषः॥ न भूतानि, अपित्वात्मैवेत्यर्थोऽप्यध्याहारदूषितः । ततश्च यस्मिन्प्रणिधानसमये स्वतन्त्रपरतन्त्रवस्तुभेदं शास्त्रेण विविच्य जानतः परमात्मा सर्वशरीरकः प्रतीतोऽभूत् । तत्र तदा स्वतन्त्रात्मभ्रमादिरूपो मोहः, सर्वस्य परमात्मविभूतित्वज्ञानेन तस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणादिनिमित्तश्शोकश्च न भवत इत्यर्थ एव सर्वप्रमाणानुगुण आस्थेयः । अन्तर्यामित्वेन सर्वव्याप्तेरेव परमात्मनस्सर्वसामानाधिकरण्यनिबन्धनमित्येतत् 'स भूमिं विश्वतो वृत्वा.... पुरुष एवेदं सर्वं', 'तदेवानुप्राविशत्....सच्च त्यच्चाभवत्', 'सर्वं समाप्नोषि ततोऽसि सर्वः', 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इत्यादिश्रुतिस्मृतिभिरिव 'सर्वभूतस्थमात्मानं,' 'तदन्तरस्य सर्वस्ये' त्यादीशावास्यवाक्यैरेव सिद्धम् । किञ्च 'ईशावास्यमिदं सर्व' मिति उपक्रम एव सादरं परमात्मात्मकत्वेनोक्तस्य सर्वस्य बाधो न वक्तुं शक्यः । मिथ्यात्वे विवक्षिते किं परमात्मव्याप्तत्वोक्त्येति । न चावस्तु व्याप्यं स्यात् । न हि मरीचिकाजलं स्नानायालोड्यते । 'एकत्वमनुपश्यत' इत्यत्रैकत्वमपि विशिष्टैक्यमेव; नैकव्यतिरिक्ताभावरूपम् । आत्मन इवान्येषामपि प्रमाणसिद्धत्वाविशेषात् । वस्तुतस्तु 'रामसुग्री-

राधाराधेयभावः, अपितु पृथिवीगन्धादेरिव स इत्युच्यते। एवमनया दिशाऽस्य वाक्यस्यैतत्सजातीयवाक्यान्तराणाञ्च सर्वप्रमाणाविरुद्धस्तदनुगुणश्च कश्चिदर्थ एव समर्थनीयः।

किञ्च नेह नानेत्येतन्नैव परपक्षानुकूलम्। अत्र इहेति ब्रह्मपरं; जगत्परं वा; नानेति च भावप्रधानं सत् भेदपरं, उत भिन्नपरं; ब्रह्मपरत्वे तस्मिन्भेदनिषेधे ब्रह्मैक्यमेव सिद्ध्येदिति पूर्वमेवोक्तम्। तद्गुणविभूतिनिषेधकथा तथासति दूरनिरस्ता। अथ ब्रह्मणि नानाभूतं किञ्चन वस्तु नास्तीति योज्येत; तथापि न स्वरूपतो जगन्निषेधसंभवः। ब्रह्मणि निषिद्धापक्षयविनाशादिन्यायात्कुत्रचिद्ब्रह्मव्यतिरिक्त आधारे निराधारतया वा तत्सत्त्वोपपत्तेः। अथ प्रपञ्चे नानात्वं नानाभूतं वा नास्तीत्यर्थ उच्येत, तदापि इहपदार्थस्य प्रपञ्चस्याधारस्यानिषिद्धत्वात्तत्सत्त्वं दुर्वारम्। प्रपञ्चस्यैकरूपत्वमेकरूपवस्त्वाधारत्व-यत्किञ्चिद्वस्त्वनाधारत्वैतदन्यतरच्च हि तदा सिद्ध्येत्। किञ्चात्र इहेत्यस्य प्रपञ्चपरत्वे स प्रपञ्चः नानापदार्थादभिन्नो भिन्नो वा। आद्ये-आधाराधेयभावानुपपत्तिः। द्वितीये प्रपञ्चाबाध उक्त एव। अपिचेह ब्रह्मणि प्रपञ्चो नास्तीत्युक्तिर्ब्रह्मणि प्रपञ्चप्रत्ययाभावे नोपपद्यत इति तत्प्रत्ययकारणेऽन्विष्यमाणे शास्त्रमेव तदवशिष्यते। प्रत्यक्षानुमानयोर्जगतो ब्रह्मनिष्ठत्वे प्रवृत्त्ययोगात्। ततश्च शास्त्रेणैव जगतस्तन्निष्ठत्वप्रत्ययावसाये शास्त्रेणैव तन्निषेधोऽनुपपन्न एव। तथासति ब्रह्मणि जगद्वर्तते, ब्रह्मणि जगन्नास्तीति परस्परविरुद्धोक्तेरुन्मत्तप्रलापिततौल्यापातात्। ननु तत्रतत्र ब्रह्मणो जगदाधारत्वं श्रूयते। 'नेह नानास्ती' ति ब्रह्मण्येव जगन्निषिध्यते। इत्थञ्च परस्परविरोधपरिहाराय वस्तुतो नास्ति, भ्रान्तिपरिकल्पितं तदस्तीत्येव विधिनिषेधयोस्तात्पर्यस्य वर्णनीयतया जगतो मिथ्यात्वं सिद्ध्यतीति चेत्, न; तथासति अधिकरणोक्तेर्वैयर्थ्यप्रसङ्गात्। नेदं किञ्चनास्तीत्येतावत एव पर्याप्तत्वात्। अपिच जगन्मिथ्यात्वे विवक्षिते सर्वं मिथ्येत्येकोक्त्यैव विवक्षितसिद्धौ बहुभिर्वा-

क्यैः प्रमाणान्तराप्रतिपन्नबहुप्रकारविशिष्टत्वेन प्रथमं जगतः प्रतिपादनं, पुनश्च ब्रह्मणि तन्नास्तीति निषेध इत्येतावतः प्रयासस्य वैयर्थ्यं दुर्वारम् । किञ्च 'तदैक्षत बहु स्यां प्रजायेय', 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा ऐतदात्म्यमिदं सर्वं', 'यस्य पृथिवी शरीरं यस्यात्मा शरीरं', 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां। जीवभूतां', 'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितं', 'तानि सर्वाणि तद्वपुः', 'इन्द्रियाणि मनो बुद्धिस्सत्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च', 'कृष्णस्य हि कृते सर्वमिदं स्थावरजङ्गम' मित्याद्यनेक श्रुतिस्मृतिभिश्चेतनाचेतनात्मकप्रपञ्चस्य प्रत्यक्षादिप्रमाणान्तराप्राप्तानां ब्रह्मात्मकत्व तत्कार्यत्व तत्प्रतिष्ठितत्व तच्छरीरत्व तच्छेषत्वानां बहुशः प्रतिपादनेन तादृशाकाराणां तदाश्रयप्रपञ्चस्य वास्तवरूपत्वेनैव शास्त्रतात्पर्यविषयतया न्यायविद्भिराश्रयणीयतया शास्त्रेणैव तन्निषेधस्सर्वात्मना न घटते । विहितव्यतिरिक्तविषयो निषेध इति हि नीतिविदः । न हि 'न हिंस्या' दिति वचनमस्तीति कृत्वा अग्नीषोमीयान्निवृत्यते युष्माभिः । लोकेपि विद्वान्ब्राह्मण आनेतव्यः, ब्राह्मणा नानेतव्या इत्यादौ सर्वानुभवसिद्धमिदम् । अन्यथा विधिवाक्यस्य सर्वात्मनाऽप्रामाण्यप्रसङ्गात् । एवं निर्गुणवाक्यविषयेप्ययमेव न्यायः। 'एष सर्वज्ञ एष सर्वेश्वरः', 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' त्यादिभिस्सर्वज्ञत्वसर्वेश्वरत्वादीनां प्रमाणान्तराप्राप्तानां विहितत्वेन तन्निषेधायोगेन हेयगुणनिषेधपरत्वस्यावश्याश्रयणीयत्वात् । एवं शरीरविषयेपि व्यवस्थाऽऽस्थेया । 'यदात्मको भगवान् तदात्मिका व्यक्तिः, ज्ञानानन्दात्मको भगवान् तदात्मिका व्यक्तिः', 'भुजैश्चतुर्भिस्समुपेतमेतद्रूपं विशिष्टं दिवि संस्थितञ्च' त्यादिवचनैरप्राकृतशरीरविधानेनाशरीरश्रुतेः प्राकृतशरीरनिषेधविषयत्वस्यैवाङ्गीकार्यत्वात् । अपिच प्रतियोगिविधाने विशेषनिषेधे च सति सामान्यनिषेधस्य विशेषनिषेधे पर्यवसानमेव न्याय्यम् । अन्यथा विधेरप्रामाण्य-

प्रसङ्गात् । यथा – पद्मपत्रे भुञ्जीथ, पलाशपत्ने भुञ्जीथ, तत्र न भुञ्जीथ, स्थलपद्मपत्रे वल्लीपलाशपत्रे न भुञ्जीथेति । अत्र स्थल-पद्मपत्र — वल्लीपलाशपत्रनिषेध एव धर्मशास्त्रकारैःस्थापितः । एवमत्र प्रपञ्चस्य गुणानां शरीरस्य च विशेषनिषेधदर्शनेन तत्सामान्यनिषेधस्य तत्रैव पर्यवसानमावश्यकम् । तत्र प्रतियोगि-विधानस्य सामान्यरूपत्वे निषिद्धविशेषव्यतिरिक्तविषयत्वम् । विशे-षरूपत्वे तु यथाश्रुतार्थपरत्वमेवेति विशेषः । एतत्त्रितयविषयेपि प्रति-योगिविधानं दर्शितम् । प्रपञ्चविषये 'न तदस्ति विना यत्स्यान्मया भूतं चराचर 'मिति श्रीगीतावचनं विशेषनिषेधरूपं भवति । मया – आत्म-तयाऽवस्थितेन विना यत्स्यात् न तदस्तीति तदर्थात् ; मदन्तर्यामि-कत्वरहितं चराचरं नास्तीति फलितोऽर्थः । अत्र जगतः परमात्मना-ऽविनाभावः – 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इत्युपक्रमानुरोधेन तदन्तर्यामिकत्वरूप एव विवक्षणीयः । अत्र मद्व्यतिरिक्तं यत् तन्ना-स्तीति नोक्तम्, किन्तु मया विनाभूतं यत् तन्नास्तीत्युक्तम् । ततश्चो-क्तएवार्थ एष्टव्यः । विशेषस्मृत्या सामान्यश्रुतेस्सङ्कोचो न्यायवित्संमत-एव । गुणविषये विशेषनिषेधरूपं वचनं 'अपहतपाप्मा विजरो विमृत्यु-र्विशोको विजिघित्सोऽपिपास ' इत्यादिकम् । शरीरविषये तत् 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवे ' त्यादिकम् । इत्थञ्च प्रपञ्चगुणशरीरनि-षेधकानां स्वनिष्ठप्रपञ्च – हेयगुण – प्राकृतशरीरनिषेधपरत्वमिति स्थितम् । अत्रेदमनुसन्धेयम्–

निषेधस्य विशेषत्वे विधेस्सङ्कोचनं मतम् ।
विधानस्य विशेषत्वे निषेधस्य तदाश्रितम् ॥
नात्र मानान्तरापेक्षा न्यायेनैवेष्टसिद्धितः ।
न सामान्यमसङ्कोच्य विशेषमवतिष्ठते ॥
तस्यारम्भबलादेव सामर्थ्यमिदमाश्रितम् ।
येन नाप्राप्त इति च शब्दशास्त्रविदो विदुः ॥

तत्रत्यविधिशब्दो हि निषेधस्यापि बोधकः ।
यथा दर्शादिकं शुद्धिकाले कर्तव्यमिष्यते ॥
यथा वा वारुणं स्नानमरोगिविषयं मतम् ।
यथा यागविशेषे च पश्वालम्भनमिष्यते ॥
तथा जगन्निषेधस्य स्वतन्त्रपरता स्थिता ।
तथा निर्गुणवाक्यस्य हेयांशपरता स्थिता ॥
तथैवादेहवचनं हेयदेहनिषेधकम् ।
लोकेपीदृक्षविषये व्यवस्थाऽऽश्रीयते जनैः ॥ इति ।

परेषामपि निषेधसङ्कोचस्तत्रतत्राभिमत उपलभ्यते । 'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिष' दित्यत्र दीपिकायां 'अन्यत्—प्रकृतादात्मनो विलक्षणं, किञ्चन — किञ्चिदपि वस्तु, न मिषत् — धातूनामनेकार्थत्वान्नासीदित्यर्थः । मायाख्यशक्तेस्सत्वेपि नात्मव्यतिरिक्तनिषेधानुपपत्तिः । तस्याश्शक्तित्वेनावस्तुत्वेन च पृथग्गणनानर्हत्वा' दिति ह्युक्तम् । अत्र नान्यदिति निषेधः नात्मव्यतिरिक्तसर्वविषयः; अपितु तद्व्यतिरिक्तशक्तिभिन्नस्वतन्त्रवस्तुविषय इत्याश्रितमिति प्रतीयते । तेषामस्माकञ्चेयानेव भेदः – मिथ्याभूतायाः मायाया अनन्यथासिद्धेन केनचित्प्रमाणेनाऽसिद्धत्वेऽपि तद्व्यतिरिक्तविषयत्वं निषेधस्याश्रीयते तैः । अस्माभिस्तु – प्रपञ्चस्यानन्यथासिद्धपरस्सहस्रप्रमाणैः परमात्मशरीरत्वादेस्सिद्धतया तादृशप्रपञ्चविपरीतस्वानिष्टप्रपञ्चविषयत्वं निषेधस्याश्रीयत इति । ततश्च नेह नानास्तीत्यादिवाक्यापेक्षयापि स्पष्टार्थकस्य प्रपञ्चादिनिषेधकस्य वाक्यस्योपलम्भेप्येवमेव बहुप्रमाणाविरोधाय तदर्थः कश्चिद्वर्णनीय इति । एतत्सर्वमभिप्रेत्यैव विदितसर्ववेदितव्यैर्न्यायविदग्रेसरैरस्मत्पूर्वाचार्यैरनुगृहीतम् –

'यद्ब्रह्मणो गुणशरीरविकारजन्मकर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः॥ 'इति.

'रूपस्थानायुधाढ्याजनिलयविधृतिव्याप्तीच्छागुणादेः

विश्वाधारे निषेधो विधिरपि विषयद्वैतशाम्यद्विरोधौ ।
इत्थंभूते निषेधः क्वचिदपि न विधिं बाधते सावकाशः
कल्याणैरस्य योगस्तदितरविरहोऽप्येकवाक्यश्श्रुतौ च ॥' इति च ।

अत्रोभयत्र आदिशब्देन प्रपञ्चो गृह्यते । अपिचाबाधितप्रत्यक्षसिद्धं प्रपञ्चं निषेद्धुं न शास्त्रमपि शक्नोति, यूपादित्यवाक्यादिवत् । तस्मान्निषेधवाक्यं विध्यविरोधेनैव नेतव्यमिति स्थितम् । एतेन 'यत्र हि द्वैतमिव भवती' त्यादिकं बृहदारण्यकवाक्यमपि निर्व्यूढं वेदितव्यम्; कस्स्वतन्त्रो घ्राता केन स्वतन्त्रेण करणेन कं वा स्वतन्त्रं घ्रातव्यं जिघ्रेदित्याद्यर्थाभ्युपगमात् । तत्रत्यद्वैतपदमपि पृथक्सिद्धवस्तुपरम् । तस्याप्रामाणिकत्वमिवशब्दो द्योतयतीति । एवं तद्वत् 'नेह नानास्ती' त्यादिकमपि । यत्तत्रोक्तं 'ब्रह्माविषयीकुर्वदपि श्रवणादिसंस्कृतं मनस्तदाकारं जायत' इत्यादि – तदसङ्गतम् । मनसस्संस्कारमात्रेण ब्रह्माकारत्वेन जननायोगात् तादृशप्रमेयस्य कुत्राप्यदर्शनाच्च । तथाच परिशुद्धेन मनसैव ब्रह्म साक्षात्कर्तव्यमित्येव 'मनसैव द्रष्टव्य' मित्यस्यार्थ इति । 'ऐतदात्म्य' मित्यादिच्छान्दोग्यवाक्यमपि न तदभिमतसाधकमिति पूर्वमेवोक्तम् । अथाप्यत्र किञ्चिदुच्यते । 'एतत् सत् आत्मा यस्य, तस्य भाव' इति विवरणमसङ्गतम् । ऐतदात्म्यपदस्य भावप्रत्ययान्तत्वे सर्वपदसामानाधिकरण्यायोगात् । 'नान्योऽस्त्यस्यात्मा संसारी' त्युक्तिरपि 'तयोरन्यः पिप्पलं स्वाद्वत्ति', 'कर्मात्मात्वपरो योऽसौ मोक्षबन्धैस्स युज्यत' इत्याद्यनेकप्रमाणविरुद्धा । 'निरुपपदमात्मपदं प्रत्यगात्मनि निरूढ' मित्यप्यसङ्गतम् । असङ्कोचात्सर्वजगद्रूपशरीरप्रतिसम्बन्धित्वरूपमात्मत्वं परमात्मन्येव हि मुख्यम् । सर्वव्यापित्वरूपमपि तत् तस्मिन्नेव विभौ, नाणुपरिमाणे जीवे। 'तत्त्वमसी' ति सामानाधिकरण्यमपि शरीरात्मभावनिबन्धनं, न स्वरूपैक्यनिबन्धनम्; 'ज्ञाज्ञौ' 'नित्यो नित्यानां', 'क्षेत्रज्ञपति' रित्यादिस्वाभाविकभेदप्रतिपादकबहुप्रमाणविरोधात् । एवमचिद्ब्रह्मणोस्सामानाधिकरण्यमपि नेयम् । सामानाधिकरण्यस्य बाधार्थत्वं न सम्भव-

ति; लक्षणादिदोषप्रसङ्गात्, सामानाधिकरण्येन बाधासिद्धे प्रपञ्चस्याकाण्डे बाधाभ्युपगमायोगात्, तत्रतत्र परमात्मान्तर्यामिकत्वतत्कार्यत्वयोस्सामानाधिकरण्यहेतुत्वेन निर्देशाच्चेति पूर्वमेवोक्तम्। न हि सामानाधिकरण्यस्येदृशहेतुनिर्देशस्थले बाधार्थत्वशङ्कापि समुन्मिषति। न हि लोके 'स्थाणोश्चोरस्सञ्जातः, तस्माच्चोरस्स्थाणु' रिति व्यवहारः क्वचिदुपलभ्यते। 'विष्णोस्सकाशादुद्भूतं जगत्.... जगच्च स' इति स्मृतिरप्यत्रानुसन्धेयेति। 'न तस्य प्राणा उत्क्रामन्ती'त्यादिकमपि न जीवन्मुक्तिसाधकम्। 'तस्ये'त्यत्र तच्छब्दस्य शारीरपरत्वं, शारीरस्यैव प्राणोत्क्रान्त्यपादानत्वञ्चेत्यंशस्य 'शारीरात्स्पष्टो ह्येकेषा' मिति सूत्रकृतैव समर्थितत्वात्। तच्छब्दस्य शरीरपरत्वे हि जीवन्मुक्तिसिद्धिः। शरीरादुत्क्रान्तस्य विदुषः श्रूयमाणगमनादिकार्यविशेषनिर्वाहाय प्राणा अपि जीवेन सह गच्छन्तीति तत्तात्पर्यादिति॥ निषेधार्थं प्रपञ्चानुवाद इत्यप्यसङ्गतम्। प्राप्तस्य खल्वनुवादः। न हि प्रत्यक्षादिना ब्रह्मात्मकत्वेन जगत्सिध्यति। अपितु स्वरूपत एव। ततश्च तेन रूपेणाप्राप्तत्वादनुवादरूपत्वं ब्रह्मात्मकप्रपञ्चप्रतिपादकानामसम्भवि। महदादीनान्तु स्वरूपं ब्रह्मात्मकत्वञ्चेत्युभयमप्यनवगतम्। अर्वाचीनफलसाधन सगुणब्रह्मोपासनार्थं गुणकथनमित्यप्यसङ्गतम्। निर्गुणब्रह्मणोऽप्राप्यसिद्धेः। तत्सिद्धावेवं कल्पनम्. एवं कल्पन एव तत्सिद्धिरित्यन्योन्याश्रयात्। निर्गुणमित्यादि तु हेयगुणनिषेधपरमितीदानीमेवोक्तम्। सर्वात्मना प्रमाणान्तराप्राप्ताकारविशिष्टजगद्विधानाविरोधेनैव निषेधवाक्यानामर्थो वर्णनीय इत्यभिप्रायेणैवाभियुक्तैः, 'तस्माद्ब्रह्मणः प्रशंसार्थैरस्थायित्वेन प्रपञ्चस्यासत्त्वमुपचरद्भिरौपनिषदैर्वादैस्तदनुसारिभिश्चेतिहासपुराणैर्भ्रान्तानां वाक्यतात्पर्यमजानानानां न्यायाभियोगशून्यानां प्रलापोऽयमद्वैतवाद इत्युपेक्षणीय' इत्युक्तम्। तस्मादेतदधिकारादौ निष्कृष्टमेव प्रमेयशरीरं, पक्षे पतनमन्तरा परमात्मनो नारायण-वासुदेव-पुरुषोत्तम-भगवदादिनामानि दुहानं सर्वव्यापकत्व सर्वाधारत्व निरतिशयदीप्तियुक्तत्व निखिल-

हेयप्रत्यनीक — कल्याणैकतानत्वादिकं स्वाभाविकमाकारजातमन्यच्च पूर्वोक्तं सम्यक् परामृशतां न्यायविदां वाक्यस्वारस्यादिदत्तदृष्टीनां समेषामपि विदुषामात्मसाक्षिकं मनसि प्रतिभायादित्यतोपि तदेव वस्तुतत्त्वमित्यलम् ॥ २२ ॥

आद्यो वेदान्तभागोऽयं समाप्तिमगमत्कृतेः ।
श्रीमच्छुकपुराधीशमहिषीकरुणाबलात् ॥

रामानुजार्यव्यासार्यनिगमान्तार्यदेशिकान् ।
वेदान्तभाष्यकारं श्रीरङ्गरामानुजं मुनिम् ॥
यत्कृपालब्धसत्तोऽहं तमाचार्यञ्च मामकम् ।
नमामि भक्तिनम्रेण शिरसा विहिताञ्जलिः ॥



इति
भेदसाम्राज्ये वेदान्तभागः प्रथमः ।



श्रीमते वेदान्तरामानुजमहादेशिकाय नमः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

श्रीमते निगमान्तमहागुरवे नमः

भगवते श्रीभाष्यकाराय नमः

श्रीपद्मावतीसमेतश्रीनिवासपरब्रह्मणे नमः
॥ शुभमस्तु ॥



## एतद्ग्रन्थकर्तृभिः कृताः ग्रन्थाः ।

| | | | |
|---|---|---|---|
| परपक्षनिराकृतिः .... .... | २ | ० | ० |
| भक्तिनिष्ठापरित्राणम् .. | ० | १२ | ० |
| मधुविद्यामार्गदर्पणः .... | ० | ४ | ० |
| लघ्वाह्निकम्, हेयोपादेयदर्पणः, आचार्यमङ्गलमालिका च | ० | ६ | ० |
| श्रीजयन्तीपारणाकालप्रकाशिका पारणासप्ततिश्च .... | ० | ३ | ० |
| पूर्णत्वविचारः ... | ० | ४ | ० |
| समस्यमानसूत्रार्थनिष्कर्षः . | ० | २ | ० |
| हस्तीशवैभवम् ... | ० | २ | ० |
| वेदसाम्राज्यम् .... | १ | ८ | ० |

एतत्प्राप्तिस्थानम् —

N. वरदाचार्यः,
*Retd. Teacher,*
तिरुचानूर्. ( तिरुपति वया )